॥ श्रीः ॥

# प्रायश्चित्तप्रकाशः ।



बीकानेरविषयान्तर्गत-रत्नगढनिवासिना कर्मकाण्डा-
चार्याद्युपाधिचतुष्टयविभूषितेन चतुर्थीलाल-
शर्मणा विरचितः ।



गंगाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम् प्रेस,

कल्याण-मुंबई.

संवत् १९८५, शके १८५०.

# उपोद्घातः ।

अथ ग्रंथकर्तॄणां जीवनचरित्रं वर्ण्यते ॥ अस्ति किल विद्वज्जनमानिते पावने भारते वर्षे भगवतस्तीर्थस्वामिनः श्रीब्रह्मपुष्कर राजस्योत्तरस्यां दिशि कश्चिन्मरुस्थलो भागः । यत्र राजते विविधराज्यसमावेशोपनीता धर्मोपवीता श्रीबीकानेरराजधानी तद्वतमेवैकं द्विजवर्यैरुपास्यमानं "रत्नगढ" नामकं मनोहरं प्रसिद्धं नगरम्–तत्रैव ग्रंथकर्तॄणां वसति पूर्वपूरुषाः । चक्रुर्धर्मेण जीवन्तः सुधियश्चिरकालतः ॥ १ ॥ प्रतिष्ठितो मान्यगणेषु गण्यो बभूव तद्वंशजजीवराजः । तदात्मनः पञ्चसुतास्त्वभूवन्रत्नानि सिन्धोरिव मथ्यमानात् ॥२॥ श्रीरामकृष्णोऽमरचन्द्रनामा तथा चनीरामगुमानिरामौ । श्रीलालचन्द्राभिध एषएव प्राधान्यमत्रापतरामकृष्णः ॥ ३ ॥ अन्येषाञ्चतुर्णामपि बाहुल्येन शाखिनां शाखाप्ररोहवद्वंशविस्तरः संजातः विस्तृतिभयाद्वक्तुं न शक्यः । विद्वच्छ्रीरामकृष्णो हि. पुत्ररत्नमजीजनत् । चतुर्भुजन्तु कस्तूरीचन्द्रं ज्येष्ठमलं परम् ॥ ४ ॥ बलवतो भगवतः कालस्य वैपरीत्यादल्पायुष्येव श्रीमान् चतुर्भुजस्तु पञ्चत्वं लेभे । अपरः श्रीकस्तूरीचन्द्रस्तु स्वकीयपितृव्याऽमरचन्द्रेण पुत्रीकृतस्तस्थौ । तृतीयः श्रीज्येष्ठमलो भक्तिदानसदाचारसंपन्नो विद्वत्सु नाम निर्वापयन् प्रियजनं विहाय स्वर्गलोकञ्जगाम । यतो विकीर्यमाणं पुत्रपौत्रप्रभृतिसंकुलं वंशं बहूनां वरीवर्ति । न शक्यते तत् पत्रीकर्तुम् । भगवान् कस्तूरीचन्द्रस्तु–आस्थापयन्नात्मनि शान्तवृत्तिं रेमे सदा पण्डितमण्डलीषु । शास्त्रीयभावेषु कृतप्रवृत्तिर्मेने प्रधानं किल कर्मकाण्डम् ॥ ५ ॥ जगन्नाथकाशीगयायाततयात्रः सदा तीव्रतेजा यतः पुण्यपात्रम् । तथाऽशेषसत्कर्म्मभिः पूतगात्रः सुखं लब्धवान् प्रार्थितब्रह्ममात्रः ॥ ६ ॥ स तु १९६१ हायनस्य कार्तिकशुक्लषष्ठ्यां ६ परलोकवर्त्माश्रितवान् ॥ उदितौ द्वौ सुतौ तस्य नानासच्छास्त्रकोविदौ ॥ अंशुमालिद्वयमिव तत्तेज उदयाचलात् ॥ ७ ॥ तत्र प्राथमिकः श्रीचतुर्थीलालः सं० १९२४ आश्विनकृष्णचतुर्थ्यां भौमवासरे मेषलग्ने जन्मावसरं प्राप । अपरः श्रीगुरुमुखरायस्तु सं० १९२७ कार्तिकशुक्लनवम्यां जन्म लभमानो व्याकरण–ज्योतिष साहित्य-काव्यालंकारेषु चाद्भुत्यं निदर्शयन् विधिवशात् कृतश्रीबद्रीनारायणयात्रः संग्रहणीरोगमिषेण सं० १९५८ मार्गशीर्षशुक्लसप्तम्यां त्यक्तश्रीमात्रः परलोकमसेवत । श्रीचतुर्थीलालस्तु–प्रारम्भतो जातकुशाग्रबुद्धिर्विवेद नूनं विषयं सदाशु । ग्रामान्तरे नाधिजगे कदापि स्थाने स्वकीये हि गृहीतविद्यः ॥ ८ ॥ बाल्यादेव विचित्रलेखलिखनेऽभ्यासोऽस्य पूर्त्तिङ्गतः श्लोकानान्तु शतत्रयं लिखितवान् सम्यक्तया प्रत्यहम् । आचार्याज्जयदेवतोऽलभत वै यज्ञोपवीतं शुभं ह्यायुर्द्वादशवार्षिकञ्च गमयन्नृष्यग्निके ३७ सम्वति ॥९॥ पण्डितश्री [illegible]ोपदेशादधीतसंध्योपासनादिनित्यकर्म्माभवत् । अथ त्रयोदशे वर्षे चैत्रशुक्लपंचम्यां [illegible]ग्रहणसंस्कारेण संस्कृतः सन् श्रीपं० वासुदेवतः कर्मकाण्डं वैद्यकविषयं श्रीमद्भागवतं [illegible]डीत् । पं०श्रीभूधरमलसाहाय्येन० याकरण-पुराण-वेदान्तेषु शास्त्रेष्वन्येषु चाभ्यसितोऽभूत् । [illegible]श्रीगौरीशंकरकृपयाऽयुर्वेदपयोनिधिं पारङ्गतवान् । पं०श्रीरामप्रतापमिश्रंज्योतिः शास्त्रे गुरुं मेने । अधुना तु–धृतशास्त्रमतिः स्थितधर्मगतिः कृतशान्तिर तिस्तृतदानततिः । तुलसीदलबिल्वदलैः सततं प्रतिपूजाति देवगणान् निरतः ॥ १० ॥ अथ १९४७ संवति मृतप्राक्तनभार्य्येणाऽपरोपि विवाहः समकारि सं १९५० ज्येष्ठशुक्लद्वादश्याम् पं० श्रीनानूरामशास्त्रिणा-सुपदेशेन खेमकोपाधिवा श्रेष्ठिश्रीलेहीरामगुप्तेन निर्मितधर्मसभायामाविंशतिवर्षंश्रोतृगणानष्टादशमहापुराणानि श्रीमहाभारतं वाल्मीकिरामायणं धर्मशास्त्राणि च श्रावयामास । ततस्तु–मंत्रैः कर्माणि शूद्राणां कारयन्ति च पण्डिताः । मत्वेदं रचयामास तदर्थं बहुपद्धतीः ॥ १२ ॥ शूद्रवास्तुपद्धतिः–शूद्रश्राद्धपद्धतिः–शूद्रविवाहपद्धतिश्चाऽपूर्वतां दर्शयाम्बभूवुः । लुप्यन्ते गौडग्रन्था: प्रचरन्ति दाक्षिणात्यमैथिला इति मन्यमानो वाराणसीप्रभृति प्रधान-

शारदास्थानेष्वपि च तदभावं विज्ञाय द्वादश महानिबन्धान् बबन्ध ह। ते च-प्रतिष्ठाप्रकाशः १ जलाशयोत्सर्गप्रकाशः २गौडीयश्राद्धप्रकाशः ३शान्तिप्रकाशः ४ मुहूर्त्तप्रकाशः ५अनुष्ठान-प्रकाशः ६ संस्कारप्रकाशः ७ व्रतोद्यापनप्रकाशः ८ प्रायश्चित्तप्रकाशः ९ दानप्रकाशः १० शुद्धिप्रकाशः ११ चिकित्साप्रकाशः १२इति संज्ञां लभन्ते। नित्यकर्मप्रयोगमालापि श्रीमतैव सम्पादिता एत उक्तग्रंथा मुंबईनिवासिश्रेष्ठिखेमराजेन स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रापिताः।अथ कृतवारचतुष्टयश्रीजगन्नाथदर्शनो गङ्गा-यमुना-सरस्वती-प्रयाग-काशी-गया-मथुरा-वृन्दावन-श्रीरामेश्वर-धनुष्कोटि-श्रीरंग-चिदम्बर-काञ्चीद्वय-वेंकटाचल-गोदावरी-त्र्यंवकेश्वर-ॐकारनाथ-महाकालनागेश्वर-वैद्यनाथ-हरिद्वार-उज्जैन-डाकोर-सिद्धपुर-गिरिनार-प्रभासक्षेत्र-सोमनाथ,सुदामापुरी-श्रीद्वारकाद्रय-कुरुक्षेत्रपृथूदक-लोहार्गल-पुष्करादि-कृतयात्रश्च सर्वत्र गङ्गाजलं कूपोदकं च पिबन् सदाचारयुतो विहितपारदकलेवरं कैलासवासिनं भगवन्तमुपास्ते अपि न द्वेष्टि देवताभ्यः काम्यश्चिदिति। अपरश्च-अस्त्येकं ग्रामरत्नं स्थितिरपि नहि तस्यातिदूरे विभाति ह्यासीत्तस्य त्वपेयं लवणितमहितं कृत्स्नशः क्षारवारि। तत्रत्योऽशेषलोको बहुतरमभुनक् प्रत्यहं स्पष्टकष्टं सौख्यार्थं तज्जनानामयमिति प्रतपन्तत्र कुण्डं चकार॥ १२॥ धन्योयमेषां परिश्रमः सहस्रशो रूप्याणाञ्च व्ययो यदालम्ब्य धूलिभिरुद्धूलिता आतपेन चातप्ताः श्रमिता पथिकजना उज्ज्वलितजाठरं भगवन्तं वैश्वानरं शमयन्ति। श्रीमतां सं० १९६३ भाद्रशुक्लत्रयोदश्यां काश्यां श्रीमहामहोपाध्याय पं० श्रीशिवकुमारशास्त्रिभिः "कर्मकाण्डाचार्य्य" इत्युपाधिः प्राप्तः। पुनः कलिकत्तानगर्यां सं०१९७३ वैशाखशुक्लपूर्णिमायां वैष्णवसम्मेलनमहासभायां प्रतिवादिभयङ्करश्रीमदनन्ताचार्य्यैः"कर्मकाण्डकोविद" इति पदेनोपाधत्त। अनन्तरं सं० १९७५ पौषकृष्णैकादश्यां श्रीभारतधर्ममहामण्डलविराट्सभायां "श्रौतभूषण" इत्युपाधिदानं प्राप्तम्। पुनश्च सं० १९७८ आश्विनकृष्णामावास्यायां श्रीशारदापीठाधीश्वरप्रभासपत्तनस्थ-जगद्गुरुश्रीशङ्कराचार्यश्रीत्रिविक्रमतीर्थस्वामिभिः "कर्मकाण्डभास्कर" इति पदेन संमानितः। संवत् १९७७ वैशाखशुक्लपूर्णिमायां भवान् महाभारतं-वाल्मीकिरामायणं-देवीभागवतम्-अष्टादशपुराणानि च भूसुरेभ्योऽदात्। अनंतरं फाल्गुनशुक्लाष्टम्यां स्वगृहात् पश्चिमदिशि पञ्चमीवीथ्याम् "श्रीपतितपावनेश्वर" नामानं शिवलिङ्गं स्थापितवान् श्रीमतो महादेवदत्तशर्माऽत्मभूर्विद्यालंकृतश्चोपतिष्ठते। तिस्रः कन्या विवाहिताः पुत्रयुक्ताश्च अपरोलघीयांश्च माणवकः पौत्रोऽप्येकः चिरञ्जीवेदिति। भवतां धर्मशास्त्रविनोदेनैव कालो गच्छति चतुष्पंचाशद्वार्षिक आयुष्यधुनाप्रवृत्तिर्महताम् परमात्मैषां देशोपकाराय चिरस्थितिंकुर्यादिति मतिः किं बहुना विज्ञेषु॥

आश्विनशुक्ला १ सं १९७७ संपादयिता-
रघुनन्दनो भिषगाचार्यः।

---

अधुना उक्तमहानुभावोंका स्वर्गवास मुझ श्रीरङ्गनाथजीका तथा श्री-श्रीनिवासजीका हार्दिकशोकप्रद है।

॥ श्रीगणेशाय नमः ॥

# अथ प्रायश्चित्तप्रकाशः ।

## विचारकाण्डः ।



माधवो माधवौ वन्दे प्रतिमालिङ्गरूपिणौ । पूजितौ व्रतदानाद्यैः प्रायश्चित्तविधायकौ ॥ १ ॥ धर्मशास्त्राणि बहुशो विचार्यैव पुनःपुनः । तद्वाक्यैः क्रियते ग्रन्थो युगधर्मानुसारतः ॥ २ ॥ युगेषु त्रिषु ये धर्माः प्रोक्ता मन्वादिभिः पुरा । शक्यन्ते नैव ते कर्त्तुं कलौ वर्णाश्रमादिभिः ॥३॥ यतो मन्दाभयो ह्रस्वा हीनसत्त्वा नराः कलौ । तद्योग्या निष्कृतिश्चात्र प्रोच्यते धर्मशास्त्रतः ॥ ४ ॥ निबन्धो बहुसाहस्रश्चातुर्थीलालभास्करः । तत्रायं नवमो ग्रन्थः प्रायश्चित्तप्रकाशकः ॥ ५ ॥

### अथ प्रायश्चित्तशब्दार्थः ।

प्रायस्य पापस्य चित्तं विशोधनं यस्मात्तत्प्रायश्चित्तम् । तथाच स्मृतिः-"प्रायः पापं समुद्दिष्टं चित्तं तस्य विशोधनम्" यद्वा प्रायस्य तपसश्चित्तं निश्चय इति तस्य व्युत्पत्तिमाह आङ्गिराः-" प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥ " इति । निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः । पापन्तु वैदिकप्रतिपाद्योऽनर्थः । अनर्थश्चानिष्टसाधनम् । पापकारणमुक्तं याज्ञवल्क्येन यथा-" विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ " मनुस्मृतावपि-" अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥ शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । इह दुश्चरितैः केचित् केचित्पूर्वकृतैस्तथा । प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः । सुवर्णचोरः कुनखी दुश्चर्मा गुरुतल्पगः ॥ चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये । निन्द्यैर्हि लक्षणैर्युक्ता जायन्ते निष्कृतैनसः ॥" यमस्मृतौ-" सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः । पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः ॥ एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः ॥" प्रायश्चित्तमाहात्म्यमाह आङ्गिराः-" उद्यच्छन् यद्वदादित्यस्तमः सर्वं व्यपोहति । तद्वत्कल्याणमातिष्ठन्सर्वं पापं व्यपोहति॥ पापश्चेत्पुरुषः कृत्वा कल्याणमभिपद्यते । मुच्यते पातकैः सर्वैर्महाभ्रैरिव चन्द्रमाः॥" कल्याणम् प्रायश्चित्तमित्यर्थः । श्रीमद्भागवतेऽपि-"न चेदिहैवापचितिं यथाऽऽह सः कृतस्य कुर्यान्मनउक्तिपाणिभिः । ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्त्तित

मे भवतास्तिग्मयातना: ॥ १ ॥ तस्मात्पुरैवाश्विह पापान्निष्कृतौ यतेत मृत्योरविपद्यतात्मना । दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक्चिकित्सेत रुजां निदानवित्॥२॥ कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् ॥ ३ ॥ " महाभारतेऽपि-" अद्भिर्गात्रान्मलमिव तमो ह्यग्निभयाद्यथा । दानेन तपसा चैव सर्वं पापमपोहति ॥" विष्णुधर्मोत्तरे-" प्रायश्चित्तैः शमं याति पापं कृतमसंशयम् । राजदण्डाच्छमं याति प्रायश्चित्तमकुर्वताम् ॥ प्रायश्चित्तविहीना ये राजभिश्चाप्यवासिताः । नरकं प्रतिपद्यन्ते तिर्यग्योनिं तथैव च॥ मानुष्यमपि चासाद्य भवन्तीह तथाङ्किताः । प्रायश्चित्तमतः कार्यं कल्मषस्यापनुत्तये ॥ " शातातपस्मृतौ-"प्रायश्चित्तविहीनानां महापातकिनां नृणाम् । नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम्॥प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचितम् । प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः॥महापातकजं चिह्नं सप्तजन्मसु जायते । उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥दुष्कर्मजा नृणां रोगा यान्ति चोपक्रमैः शमम् । जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत्॥ " मनुस्मृतौ-"अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः । कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् ॥ अकामतः कृतं पापं वेदाभ्यासेन शुद्ध्यति । कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः ॥ चारितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये । अज्ञानाद्यदि वा ज्ञानात्कृतं कर्म विगर्हितम् ॥ तस्माद्विमुक्तिमन्विच्छन्द्वितीयं न समाचरेत् ॥"अथ प्रायश्चित्ताकरणे प्रत्यवायो याज्ञवल्क्येन दर्शितः-"प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् ॥ तामिस्रं लोहशङ्कुश्च महानिरयशाल्मली । रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् ॥ सङ्घातं लोहितोदश्च सविषं संप्रपातनम् । महानरककाकोलं सञ्जीवनमहापथम् ॥ अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च । असिपत्रवनं चैव तापनं चैकविंशकम् ॥ महापातकजैर्घोरैरुपपातकजैस्तथा । अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ॥ " मनुस्मृतावपि-" तामिस्रमन्धतामिस्रं महारौरवरौरवौ । नरकं कालसूत्रं च महानरकमेव च ॥ संजीवनं महावीचिं तपनं संप्रतापनम् । संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥ लोहशंकुमृजीषं च पन्थानं शाल्मलं नदीम् । असिपत्रवनं चैव लौहचारकमेव च॥"

## अथ प्रायश्चित्तिनः पर्षदुपस्थानम् ।

आङ्गिराः-"कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्द्धयेत् पापमसत्यं पर्षदि ब्रुवन् ॥ सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं गतः ॥ गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत् ॥" इति । उपस्थानं च ब्राह्मणान्वस्त्रादिना तोषयित्वा कार्यम् । महत्सु पापेषु

राज्ञोप्युपस्थितिः कार्या । तथा च देवलः-" स्वयं वा ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते । राज्ञा च ब्राह्मणैश्चैव महत्सु परिचक्षते ॥" इति

## पारषल्लक्षणम् ।

पारिषदमाह वृद्धपराशरः-" पर्षद्दशावरा प्रोक्ता ब्राह्मणैर्वेदपारगैः । सा यद्ब्रूयात्स धर्मः स्यात्स्वयम्भूरित्यकल्पयत् ॥ वेदशास्त्रविदो विप्रा यं ब्रूयुः सप्त पञ्च वा । त्रयो वापि स धर्मः स्यादेको वाऽध्यात्मवित्तमः॥ न लक्षेणापि मूर्खाणां न चैवाधर्मवेदिनाम् । विदुषां नापि लुब्धानां न चापि पक्षपातिनाम् ॥ श्रुताध्ययनसम्पन्नः सत्यवादी जितेन्द्रियः । सदा धर्मरतः शान्त एकः पर्षत्त्वमर्हति ॥ न सा वृद्धैर्न तरुणैर्न सुरूपैर्धनान्वितैः। त्रिभिरेकेन पर्षत्स्याद्विद्वद्भिर्विदुषापि वा ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् । नासौ धर्मो यत्र नो सत्यमस्ति नो तत्सत्यं यच्छलेनाभ्युपेतम् ॥ निष्कृतौ व्यवहारे च व्रतस्याशंसने तथा। धर्मं वा यदि वाधर्मं परिषत्प्राह तद्भवेत्॥ प्रविश्य पर्षदं ते वै सभ्यानामग्रतः स्थिताः । यथाकालं प्रकुर्युस्ते प्रायाश्चित्तं तदीरितम् ॥" वृद्धसूर्यारुणेपि-"दश पञ्चाथ चतुर उपदेश्य द्विजाञ्छुभान् । तेषामनुज्ञया सर्वं प्रायश्चित्तमुपक्रमेत् ॥ विधाय वैष्णवं श्राद्धं सङ्कल्पं निजकाम्यया । धेनुं दद्याद्विजेभ्योऽयं दक्षिणाश्च स्वशक्तितः ॥ अलंकृत्य यथाशक्त्या वस्त्रालङ्करणैर्द्विजान् । याचेत दण्डवन्नत्वा प्रायश्चित्तं यथोचितम् ॥ जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि । सर्वं भवति चाच्छिद्रं यस्य चेच्छन्ति वै द्विजाः॥ ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः । सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥ उपवासो व्रतं चैव स्नानं तीर्थफलं तपः । विप्रैः सम्पादितं यस्य संपन्नं तस्य तद्भवेत् ॥ ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम् । तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥ सम्पन्नमिति तद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा धार्यमग्निष्टोमफलं भवेत् ॥ प्रायश्चित्तमकृत्वा तु न कुर्यात्कर्म किञ्चन । अनिस्तीर्यमघं नित्यं वर्धते द्विगुणं पुनः॥ दानैर्दयाभिरतिथिद्विजदेवतागोदेवार्चनप्रणातिभिश्च जपैस्तपोभिः । इत्युक्तपुण्यनिचयैरपचीयमानं प्राक्पापजातमशुभं प्रशमं नयन्ति ॥ निष्कृत्या कर्मजन्मोत्थौ दोषजस्त्वौषधेन हि । उभयाज्जायमानस्तु निष्कृत्यौषधसेवया॥" बृहत्पाराशर्याम्-" यथा कृतं च यत्पापं तथैव विनिवेदयेत् । यस्तेषामन्यथा ब्रूयात्स पापीयान्न संशयः ॥ सत्यं चासत्यमेवात्र विपर्यस्तं च वेदितः । स एवानृतवादी स्यादनन्ते नरके व्रजेत् ॥ ज्योतिषं व्यवहारं च प्रायश्चित्तं चिकित्सितम । अजानन्यो नरो ब्रूते साहसं किमतः परम् ॥ " इति ॥

## प्रायश्चित्ताकथने दोषः ।

यथा—"आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः ॥ अनर्च्चितैरनाहूतैरपृष्टैश्चैव संसदि । प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः ॥ न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः । अन्तरा ब्राह्मणं कृत्वा व्रतमेतत्समादिशेत् ॥" हारीतः—यथावयो यथाकालं यथाप्राणं च ब्राह्मणे । प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः ॥ तस्मात्कृच्छ्रमथाप्यर्द्धं पादं वापि विधानतः । ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत् ॥" अशक्तावनुग्रहमाह पराशरः—"स्त्रीणां च बालवृद्धानां क्षयिणां कुशरीरिणाम् । उपवासाद्यशक्तानां कर्त्तव्योऽनुग्रहश्च तैः ॥ दुर्बलेऽनुग्रहः कार्यस्तथा वै शिशुवृद्धयोः । अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रही भवेत् ॥ स्नेहाद्वा यदि वा लोभान्मोहादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥ ज्ञात्वा देशं च कालं च वयः सामर्थ्यमेव च । कर्त्तव्योऽनुग्रहः सद्भिर्मुनिभिः परिकीर्त्तितः ॥ लोभान्मोहाद्भयान्मैत्र्या यदि कुर्युरनुग्रहम् । ते मूढा नरकं यान्ति शतधा प्राप्तपातकाः ॥" अङ्गिराः—"अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः । प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥" विष्णुः—"स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः ॥" अङ्गिराः—"ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च । चरेद्गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये ॥ ततो न्यूनतरस्यास्य नापराधो न पातकम् । न चास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते॥" महाभारते—"आचतुर्दशकाद्वर्षान्न भविष्यति पातकम् । परेण कुर्वतामेवं दोष एव भविष्यति ॥" इति । इदन्तु अत्यन्तगुणवद्बालविषयकमिति शूलपाणिः॥॥ विश्वामित्रोऽपि—"जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा । अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् ॥" प्रायश्चित्तदाने फलमाह अङ्गिराः—"यत्पुण्यमुद्धृते विप्रे म्रियमाणे जलादिषु । तत्पुण्यं तारिते पापात्प्रायश्चित्तैस्तु मानवे ॥" इति ॥

## अथ पापनिष्क्रमणादि ।

प्रायश्चित्तविवेके मनुः—"ख्यापनेनानुतापेन तपसाऽध्ययनेन च । पापकृन्मुच्यते पापात्तथा दानेन चापदि ॥" आपदीत्यनेन अध्ययनतपसोर्दानम् अनुकल्प इत्युक्तम् । एतद्धिंसाव्यतिरिक्तविषयम् । हिंसायान्तु दानमेव मुख्यम् । तथा च भविष्ये—"हिंसात्मकानां सर्वेषां कीर्त्तितानां मनीषिभिः । प्रायश्चित्तकदम्बानां दानं प्रथममुच्यते ॥" मनुस्मृतावपि—"दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् । एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥" संवर्त्तोऽपि—" हिरण्यदानं गोदानं भूमिदानं तथैव च । नाशयन्त्याशु पापानि महापातकजान्यपि ॥" यमोऽपि—

" शोषणेन शरीरस्य तपसाऽध्ययनेन च । पापकृन्मुच्यते पापाद्दानेन च दमेन च ॥ " मनुस्मृतावपि-" कृत्वा पापं हि सन्तप्य तस्मात्पापात्प्रमुच्यते । नैतत् कुर्यात्पुनरिति निवृत्त्या पूयते नरः ॥ " यमोऽपि-" गवाह्निका देवपूजा वेदाभ्यासः सरित्प्लवः । नाशयन्त्याशु पापानि महापातकजान्यपि ॥ " महाभारते-" यद्यकार्यशतं कृत्वा कृतं गङ्गाभिषेचनम् । सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः ॥ " श्रीमद्भागवते-" तपसा ब्रह्मचर्येण शमेन च दमेन च । त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥ देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः । क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि । एवं नियमकृद्राजञ्शनैः क्षेमाय कल्पते॥" विष्णुपुराणे-"प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ " श्रीमद्भागवतेऽपि-" न तथा ह्यघवान्राजन्पूयेत तपआदिभिः । यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ केचित्केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् । न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः ॥ स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः । स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् । नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ " महाभारते-" कृत्वा पापं पूर्वमबुद्धिपूर्वं पुण्यानि चेत्कुरुते बुद्धिपूर्वम् । स तत्पापं नुदते कर्मशीलो वासो यथा मलिनं क्षारयुक्तम् ॥" देवलस्मृतौ-"कृत्वा पापमविज्ञानाद्भ्रूणहत्यादि तत्पुनः । निरस्यति महायज्ञैरथवा तीर्थचर्यया ॥ " इति ॥

## अथ पापशोधकानि व्रतानि ।

प्रायश्चित्तविवेके विश्वामित्रः-"कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम् । प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे ॥ प्राजापत्यः सान्तपनः शिशुकृच्छ्रः पराककः । अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः ॥ महासान्तपनः शुद्ध्यै तप्तकृच्छ्रस्तु पावनः । जलोपवासकृच्छ्रश्च ब्रह्मकूर्चस्तु शोधकः ॥ एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा । पातकादिषु सर्वेषु पापकेषु प्रयत्नतः ॥ कार्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये । शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ॥ यवमध्यस्तथा प्रोक्तस्तथा पिपीलिकाकृतिः । उपवासस्त्रिरात्रं वा मासं पक्षं तदर्द्धकम् ॥ षडहद्वादशाहादि कार्यं शुद्धिफलार्थिना । उपपातकयुक्तानामनादिष्टेषु चैव हि॥प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया । जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा। अनुबन्धादिकं दृष्ट्वा सर्वं कार्यं यथाक्रमम् ॥ इति प्रकाशकृते पापे मुख्यानि व्रतानि । रहस्यकृते जपादीनि ॥ तथाच मनुः-"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः । अनाविष्कृतपापांस्तु मन्त्रैर्होमैस्तु शोधयेत् ॥"

## अथ पूर्वोक्तव्रतस्वरूपाणि ।

तत्र तावत् प्राजापत्यव्रतस्वरूपमाह पराशरः—"त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् । त्र्यहञ्चैव न भुञ्जीत प्राजापत्यो विधिः स्मृतः॥सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा । अयाचिते चतुर्विंशः परञ्चानशनं स्मृतम् ॥ कुक्कुटाण्डप्रमाणं तु यावान्वा प्रविशेन्मुखम् । एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्॥"

अथ सान्तपनम् । तत्र याज्ञवल्क्यः—" गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । जग्ध्वापरेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं स्मृतम् ॥ " इति द्विरात्रः सान्तपनः कृच्छ्रः ॥

अथ पराकः । तत्र मनुः—"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । पराको नामकृच्छ्रोऽयं सर्वपापापनोदनः ॥" बृहस्पतिरपि—"जपहोमरतः कुर्याद्द्वादशाहमभोजनम् । पराक एष विख्यातः सर्वपापप्रणाशनः ॥"

अथ शिशुकृच्छ्रव्रतम् । तत्र मनुः—"अहः कल्यमहः सायमहरद्यादयाचितम् । अहस्तु वायुभक्षः स्याच्छिशुकृच्छ्रं विधीयते ॥ "

अथातिकृच्छ्रव्रतम् । तत्र प्रजापत्यमभिधायाह याज्ञवल्क्यः—"अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः "।

पर्णकृच्छ्राख्यं व्रतमाह—"पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः । प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः" । इति पञ्चाहसाध्यः पर्णकृच्छ्रः ॥

सौम्यकृच्छ्रव्रतमाह—" पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् । एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ " पिण्याकस्तिलखलिः । आचामो भक्तमण्डः । एष तु षडहसाध्यः सौम्यकृच्छ्रः ।

कृच्छ्रातिकृच्छ्रव्रतमाह—" कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् " ।

महासान्तपनाख्यं कृच्छ्रमाह—" पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ " इति सप्ताहसाध्यं महासान्तपनं व्रतम् । यमस्मृतौ विशेषः—" त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् । त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ॥महासान्तपनं ह्येतत्सर्वपापप्रणाशनम् ॥"

तप्तकृच्छ्रमाहात्रिः " त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् । त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षो दिनत्रयम् ॥ षट्पलं तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् । पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ॥ " वायुभक्षणमुपवासः ॥

ब्रह्मकूर्चमाह पराशरः—"ब्रह्मकूर्चं प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । कृतेन येन मुच्यन्ते मनुष्याः सर्वकिल्बिषैः ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं तु पवित्रं पापशोधनम् ॥ गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोम-

यम् ॥ पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि। कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा। मूत्रमेकपलं दद्यादङ्गुष्ठार्द्धं तु गोमयम् ॥ क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते। घृतमेकपलं दद्यात्पलमेकं कुशोदकम् ॥ गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा दधि ॥ तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्। पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ॥ आपोहिष्ठेति चालोड्य मानस्तोकेति मन्त्रयेत् ॥ सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः। एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥ इरावती इदं विष्णुर्मानस्तोके च शंवती। एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः ॥ आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु। उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु ॥ मध्यमेनैव पलाशस्य पद्मपत्रेण वा पुनः। स्वर्णपात्रेण ताम्रेण ब्रह्मतीर्थेन वा पुनः ॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम्। ब्रह्मकूर्चो दहेत्सर्वं प्रदीप्ताग्निरिवेन्धनम् ॥ पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम्। वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः। दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः ॥" ब्रह्मकूर्चस्य कालमाह प्रजापतिः—"चतुर्दश्यामुपोष्याथ पौर्णमास्यां समाचरेत्।" जाबालिरपि—"अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चमिति स्मृतम् ॥" देशविशेषे शातातपआह—"नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च। तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत् ॥" वृद्धपाराशर्यां विशेषः—"निष्पन्नं पञ्चगव्यं च पात्रेषु क्रमतः पिबेत्। मध्यमेन पलाशस्य तत्पत्रेण पिबेद्द्विजः ॥ द्वितीयं पद्मपत्रेण ब्रह्मपत्रेण चापरम्। चतुर्थं ताम्रपात्रेण तत्पिबेद्व्रतकृन्नरः ॥ विष्णुं संस्नापयेद्भक्त्या पञ्चगव्येन चार्चयेत्। कूष्माण्डैर्जुहुयान्मन्त्रैः पञ्चगव्यं हुताशने ॥ सव्याहृत्या च गायत्र्या तथैव प्रणवेन च। ब्रह्मकूर्चमिदं प्रोक्तं व्रतं पञ्चदिनात्मकम् ॥ पञ्चगव्यं च संप्राश्य पञ्चरात्रोपवासकृत्। नक्तेन वा समश्नीयाद्यावच्छक्त्युदितानि च ॥ पाञ्चाहिकं पारणकं व्रतस्यास्य प्रकीर्तितम्। निर्दहेत्सर्वपापानि ब्रह्मकूर्चमिदं व्रतम् ॥ अन्ये वदन्ति कवय उपवासं विना व्रती। जपहोमादि कर्त्तव्यं देवतार्चनमेव वा ॥ पञ्चगव्यं च होतव्यं पञ्चगव्यं समाश्नियात्। ब्राह्मणान्भोजयेत्तावद्यावत्कुर्यादिदं व्रतम् ॥"

अथ चान्द्रायणव्रतम्। तथा च वासिष्ठः—"एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत्। इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः ॥" मनुस्मृतौ—"एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्द्धयेत्। उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥"

यतिचान्द्रायणम्। "अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते। नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्।" शिशुचान्द्रायणम्—"चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः। चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥ यथाकथंचित्पिण्डानां तिस्रोऽशीतीः समाहितः। मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम् ॥"

पर्षदुपदिष्टव्रतग्रहणं तु व्रतानुष्ठानदिवसात्पूर्वेद्युः सायाह्ने कार्यम्। यथाह वासिष्ठः "सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम्। ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते॥ दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत्। भस्मगोमयमृद्वारिपञ्चगव्यादिकाल्पितैः॥ मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये। दन्तधावनपूर्वेण पञ्चगव्येन संयुतम्॥ व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने। आचम्यातः परं मौनी ध्यायन् दुष्कृतमात्मनः॥ मनःसन्तापनं तीव्रमुद्वहेच्छोकमन्ततः॥" बहिरिति ग्रामाद्बहिर्निष्क्रम्य। केशधारणेच्छायां द्विगुणव्रतमाह—हारीतः। "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्॥ केशानां धारणार्थं तु द्विगुणं व्रतमाचरेत्। द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत्॥" इति॥ एतानि पूर्वोक्तव्रतानि कृत्वा नरः पूतो भवति। तथा च वृद्धपराशरः—"यावन्ति पापानि भवन्ति दैवादकामतो वाप्यथ कामतो वा। उक्तानि तेषां मुनिभिर्व्रतानि शुद्ध्यर्थमेतानि पराणि चास्य॥ धर्मार्थमेतानि कृतानि पुंसां दद्युर्दिवौकस्त्वविमुक्तसिद्धीः। अत्रापि पूज्यत्वमशेषलोके तेजःशरीरे विचरन्विभाति॥ यस्यास्ति भीतिः पुरुषस्य पापादिच्छेच्च कर्तुं क्षयमेनसां यः। प्रेत्य व्रतं च व्रतदानजाप्यं प्रोदिष्टमेतन्न तदन्यदस्ति॥" इति। कलौ तु दानमेव मुख्यम्। चान्द्रायणादिव्रतानां कर्त्तुमशक्यत्वात्। तथा च पराशरः—"वदन्ति दानं मुनयः प्रधानं कलौ युगे नान्यदिहास्ति किञ्चित्। विशोधनं स्वर्ग्यमिहापि पूज्यं वदामि तस्मादथ दानधर्मान्॥" लघुपाराशरोऽपि—"तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते। द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे॥" आदित्यपुराणे विशेषः—"यस्तु कार्त्तयुगो धर्मो न कर्त्तव्यः कलौ युगे। पापप्रसक्तास्तु यतः कलौ नार्यो नरास्तथा॥" इति। अतः कलौ प्राणिनां कष्टसाध्ये चान्द्रायणादिव्रतधर्मे प्रवृत्त्यसंभवात्सुकरो दानधर्मोऽत्र कर्त्तुमुचितः॥ अथ पूर्वोक्तानां प्राजापत्यादिव्रतानां केनचिन्निमित्तेनानुष्ठानाशक्तौ यथायोगं प्रत्याम्नाया उच्यन्ते। तत्र प्राजापत्यस्य प्रत्याम्नायाश्चतुर्विंशतिमते दर्शिताः—"कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम्। तिलहोमसहस्रन्तु वेदपारायणं तथा॥ विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च। अथवा पावमानेष्टिः समान्याहुर्मनीषिणः॥" अपरार्केऽपि—"द्वादशैव सहस्राणि जपेद्देवीमुपोषितः। जलान्ते विधिवन्मौनी प्राजापत्योऽयमुच्यते॥ उपोष्य श्रद्धया युक्तस्तिलपात्राणि धर्मतः। द्वादश ब्रह्मवादिभ्यः प्राजापत्येन तत्समम्॥" दत्त्वा इति शेषः। पात्राणि तिलपूरितताम्रपात्राणि॥ तिलपात्रमानं कौर्मे—"तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम्। ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम्॥ द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतम्"। अपरार्के वसिष्ठः—"निश्यासीनो दिवा तिष्ठेत्त्रिरात्रं मारुताशनः। प्राजापत्यं

विजानीयात्कूष्माण्डैर्जुहुयाद्घृतम् ॥" इति ॥ कूष्माण्डैः "यद्देवादेवहेडनम्" इति त्रिभिर्मंत्रैरित्यर्थः । पराशरमाधवीये—"प्राजापत्यं चरन्विप्रो यद्यशक्तः कथञ्चन । अहानि पञ्च विप्राग्र्यान्भोजयेत्सम्यगीप्सितान् । एकमध्ययनं कुर्यात्प्राजापत्यमथापि वा । दद्याद्द्वादशसाहस्रं गवां मुष्टिं विचक्षणः॥" मुष्टिं तृणमुष्टिमिति भावः । "प्राजापत्यक्रियाशक्तौ धेनुं दद्यात्पयस्विनीम् । धेनोरभावे दातव्यं मूल्यं तुल्यं न संशयः ॥" इति । मूल्यं तु ब्रह्मपुराणे उक्तम्—"गवामभावे निष्कं स्यात्तदर्धं पादमेव वा ॥" इति । निष्कं सुवर्णाश्चत्वारः । सुवर्णस्त्वशीतिगुञ्जापरिमितं रजतम् । वृद्धसूर्यारुणसंवादे—"यवद्वयस्य गुञ्जा स्यान्माषो गुञ्जाष्टकस्य च । सुवर्णो दशमाषः स्यात्ते चत्वारः पलं स्मृतम् ॥ सुवर्णकर्षौ तुल्यौ स्तो माने रजतकाञ्चने ॥" इति पलं निष्कमित्यर्थः ॥

अथ कृच्छ्रव्रतप्रत्याम्नायाः । अपरार्के—"समिद्घृतं हविर्धान्यं तिलान्वा मारुताशनः । हुत्वा द्वादशसाहस्रं गायत्र्या कृच्छ्रमाप्नुयात् ॥ अन्नदानं हिरण्येन द्वादश ब्राह्मणाञ्शुचीन् । तर्पयेन्मारुताशी च श्रोत्रियान्कृच्छ्रमुच्यते॥" अङ्गिराः—"कपिलायान्तु दुग्धायां धारोष्णं तु पयः पिबेत् । एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् " ॥ वसिष्ठश्च—"गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् । कृच्छ्रमेकाहिकं प्रोक्तं दृष्टमङ्गिरसा स्वयम् ॥ स्वयमाहृत्य यो मूर्ध्ना तृणभारमुपोषितः । दद्याद्गोमण्डले कृच्छ्रो द्वादशैवमसंशयः ॥" भारो द्विसहस्रपलपरिमितः । "प्राणायामशतं कृत्वा द्वाविंशोत्तरमार्तिषु । अहोरात्रोषितस्तिष्ठेत्प्राङ्मुखः कृच्छ्र उच्यते ॥ नमस्कारसहस्राणि द्वादशैव दृढव्रतः । गोविप्रपितृदेवेषु कुर्यात्कृच्छ्रत्रयं भवेत् ॥" पराशरः—"कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् । पुण्यतीर्थेनार्द्रशिराः स्नानं द्वादशसंख्यया " ॥ षट्त्रिंशन्मते—"प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् ॥" चतुर्विंशतिमतेऽपि—"प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् । पराके नव तप्तातिकृच्छ्रे तिस्रस्तु ताः स्मृताः ॥ अष्टौ चान्द्रायणे ज्ञेयास्तिस्रो वा शक्त्यपेक्षया ॥" वृद्धसूर्यारुणसंवादेऽपि—"गोदानं च तथा तेषु कर्त्तव्यं पापशोधनम् । एका कृच्छ्रेऽतिकृच्छ्रे द्वे तिस्रश्चान्द्रायणे व्रते ॥ गवामभावे निष्का वा साशीतिशतकृच्छ्रदाः । षड्वार्षिके महाभाग प्रायश्चित्ते यथोदिते ॥ यत्र यावत्संख्यया प्राजापत्यान्यावर्त्तनीयानि भवन्ति तत्र तावत्सङ्ख्यया गोदानान्यावर्तनीयानि । तदपि चतुर्विंशतिमते दर्शितम्—"जन्मप्रभृति पापानि बहूनि विविधानि च । अर्वाक् तु ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत् ॥ प्रत्याम्नाये गवां देयं साशीति धनिना शतम् । तथाष्टादशलक्षाणि गायत्र्या वा जपेद्बुधः ॥ गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति

हेमहर्त्तारं गायत्रीलक्षसप्ततिः। गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगः॥ कृच्छ्रादिषु ब्राह्मणभोजनसङ्ख्या पराशरमाधवीये-"कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये चत्वारिंशच्च तप्ते त्रिगुणभगुणिता विंशतिः स्यात्पराके। कृच्छ्रे सन्तापनाख्ये भवति षडधिका विंशतिः सैव हीना द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशवलो भोजयेद्विप्रमुख्यान्॥ धर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः। जपहोमादिकं तेभ्यो विशेषेण विधीयते॥नामधारकविप्रा ये मूर्खा धर्मविवर्जिताः। कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः॥ धनिना दक्षिणा देया प्रयत्नविधिना तु या। एवं नरविशेषेण प्रायश्चित्तानि दापयेत्॥"

## अथ कृच्छ्रादिव्रतस्थानेषु तीर्थप्रत्याम्नायाः।

तत्र समूलत्वदर्शनार्थमादित्यपुराणोक्तं किञ्चिल्लिख्यते-"पाण्डवा राज्यलाभाय दुरितोपशमाय च। श्रीकृष्णनारदव्यासश्रीकण्ठेन्द्राजरोमशाः॥ मार्कण्डेयपुलस्त्याजसप्तर्षिप्रमुखास्तथा। द्वादशद्वादशाब्दाभिः कृच्छ्राण्यादाय भक्तितः। तीर्थैरकुर्वन्नित्यादि पुराणे श्रूयते कथा॥" इति। पराशरमधावे देवलोऽपि-"अभिगम्य च तीर्थानि पुण्यान्यायतनानि च। नरः पापात्प्रमुच्येत ब्राह्मणानां तपस्विनाम्॥ सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः। सर्वमायतनं पुण्यं सर्वे पुण्या वनाश्रयाः॥"इति। अत्र च स्मृतिसंग्रहस्मृत्यर्थसारादिभिरुक्तप्रकारोऽस्माभिरपि लिख्यते। भागीरथ्यां स्नानं पादचारेण षष्टियोजनागतस्य षडब्दकृच्छ्रसमम्। अत्र यात्रायोजनवृद्धौ योजनस्यार्द्धकृच्छ्रा वृद्धिः। एकायोजनागतस्य मध्ये पर्वतादिव्यवधाने कृच्छ्रत्रयम्। तृतीयांशाधिकक्रोशादागतस्य भागीरथ्यां विद्वद्युक्तस्नाने एककृच्छ्रः। प्रयागे द्विगुणम्। गङ्गाद्वारे गङ्गासागरसङ्गमे चैवम्। वाराणस्यामगणितम्। वाराणस्यां पातकं न प्रविशति। विंशतियोजनागतस्य यमुनासरस्वत्योः स्नानमब्दसमम्। मथुराद्वारवत्योर्द्विगुणम्। प्रभासेऽप्येवम्। दृषद्वती-शतद्रु-विपाशा-वितस्ता-शरावती-मरुद्वृधाऽसिक्नी-मधुमती-पयस्विनीत्यादिषु देवनदीषु स्नानं त्रिंशद्योजनागतस्याब्दसमम्। चन्द्रभागा-वेत्रवती-सरयू-गोमती-देविका-कौशिकी-मन्दाकिनी-पुनःपुना-पूर्णा-पुण्या-बाहुदा-वारुणी-गण्डक्यादि देवनदीषु द्वादशयोजनागतस्य षोडश कृच्छ्राणि। एतासां परस्परसङ्गमे द्विगुणम्। अन्यासु समुद्रगासु नदीषु द्वादशयोजनागतस्य षट्कृच्छ्रसमम्। कुरुक्षेत्रे सान्निहित्यां नर्मदायां चतुर्विंशतियोजनागतस्य चतुर्विंशतिकृच्छ्रसमम्। कुब्जिकासङ्गमे द्विगुणं शुक्लतीर्थे चतुर्गुणम्। गोदावर्यां षष्टियोजनागतस्य त्र्यब्दसमम्। वञ्जरा-प्रणीतयोर्नर्मदावत्। पूर्णायां योजनार्द्धे कृच्छ्रम्। कृष्णावेणी तुङ्गभद्रयोरतियोजनं कृच्छ्रम्। पम्पायां द्विगुणम्। हरिहरे द्विगुणम्। कुल्याः स्नानेन त्रिरात्रो-

पवासफलदाः । सर्वत्र समुद्रस्नानं दर्शे कार्यम् । समुद्रस्नाने पञ्चदशयोजनागतस्य पञ्चदश कृच्छ्राणि । उक्तान्यसर्वतीर्थेषु श्रीरामेश्वरपुरुषोत्तमक्षेत्र-श्रीरङ्ग-बदरीनारायणादिक्षेत्रेषु योजनसंख्यया कृच्छ्रसङ्ख्या देवतासमीपे सरःसरिन्नदीसङ्गमेषु च स्नानं सदा कार्यम् । इति । परार्थं गन्ता तीर्त्थषोडशांशं लभेत् । प्रसङ्गेन गन्तार्द्ध-फलम् । पितृमातृजायाभ्रातृपितामहमातामहपितृव्यमातुलपुत्रपुत्रीश्वशुरपोषकार्थे गुर्वाचार्योपाध्यायार्थं तेषां पत्न्यर्थं पितृष्वसृमातृष्वस्रर्थं च स्नात्वा स्वयमष्टमांशं लभते । तीर्थफलभागिनो काशीखण्डे-"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ प्रतिग्रहादुपावृत्तः सन्तुष्टो येनकेनचित् । अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते॥ अदाम्भिको निरारम्भो लघ्वाहारो जितेन्द्रियः । विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥ अक्रोधनोऽमलमतिः सत्यवादी दृढव्रतः। आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः । हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥" मत्स्य-पुराणे-"ऐश्वर्यलाभमाहात्म्याद्गच्छेद्यानेन यो नरः । निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत् ॥" स्कान्दे तु-"पुण्यार्द्धं हरते याने तदर्द्धं छत्रपादुके । तदर्द्धं तैलमांसाभ्यां सर्वं हरति मैथुने ॥" इति । "तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा । शिरोगतानि पापानि यान्ति मुण्डनतो यतः । तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत् । स्नानजं फलमाप्नोति तीर्थयात्राश्रितं नतु ॥ मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः । वर्ज्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥" कलौ तु गङ्गास्नानमेव सर्वविधपापहरम् । तथा च महाभारते-" गङ्गास्नानं सर्वविधं सर्वपापप्रणाशकम् । चान्द्रायणसहस्रं तु यश्चरेत्कायशोधनम् ॥ पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां नवा समौ । भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यनिदर्शनात् ॥ गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ।" इति । नचैतदर्थवादः । तथा च भविष्यकूर्मपुराणयोः-" स्नानमात्रेण गङ्गायां पापं ब्रह्मवधोद्भवम् । दुराधर्षं कथं याति चिन्तयेद्यो वदेदपि ॥ तस्याहं प्रददे पापं ब्रह्मकोटिवधोद्भवम् । स्तुतिवादमिमं मत्वा कुम्भीपाकेषु जायते॥ आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः। पापानां पापहन्त्रीत्वं स्वर्गमोक्षैकहेतुता ॥ स्वभाव एव गङ्गायाः शैत्यं शीतरुचेर्यथा । न गङ्गासदृशं तीर्थं न देवः केशवात्परः । ब्राह्मणेभ्यः परं नास्तीत्येवमाह पितामहः ॥ " ब्रह्माण्डाग्नेययोः-" दृष्ट्वा तु हरते पापं स्पृष्ट्वा तु त्रिदिवं नयेत् । प्रसङ्गेनापि या गङ्गा मोक्षदा त्ववगाहिता ॥" भविष्ये-" यत्फलं जायते पुंसां दर्शनात्परमात्मनः । तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः ॥ " ब्रह्माण्डे-" यैः पुण्यवाहिनी गङ्गा सकृद्भक्त्यावगाहिता । तेषां कुलानां लक्षन्तु भवात्तारयते शिवा ॥ अनेकजन्मसंभूतं पापं पुंसां प्रणश्यति।स्नानमात्रेण गङ्गायां सद्यः पुण्यस्य

भाजनम् ॥" महाभारते दानधर्मे-"अन्धाः क्लीबा जडा व्यङ्गा पतिता रोगिणोऽन्त्यजाः । गङ्गां संसेव्य पुरुषा देवैर्गच्छन्ति तुल्यताम् ॥ स्नानन्तु भक्त्या गङ्गायां कर्त्तुकामस्य गच्छतः । पदेपदेऽश्वमेधस्य फलं मर्त्यस्य जायते ॥" ब्रह्माण्डे-"ये गच्छन्ति स्वतो गङ्गां परांश्च प्रेरयन्ति ये । इह ते सर्वभोगानामन्ते ज्ञानस्य भाजनम् ॥" स्कान्दे-"यज्ञो दानं तपो जाप्यं श्राद्धं च सुरपूजनम् । गङ्गायां यत्कृतं सर्वं कोटिकोटिगुणं भवेत् ॥" गङ्गायां वर्जनकर्माणि । ब्रह्माण्डे-"गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् । शौचमाचमनं सेकं निर्माल्यं मलघर्षणम् ॥ गात्रसंवाहनं क्रीडां प्रतिग्रहमथो रतिम् । अन्यतीर्थरतिं चैव अन्यतीर्थप्रशंसनम् ॥ वस्त्रत्यागं तथाघातं संतारश्च विशेषतः ॥" गङ्गाक्षेत्रफलं स्कान्दे-"तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते । अत्र यद्यत्कृतं कर्म गङ्गायां नात्र संशयः । अत्रस्थास्त्रिदिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥" इति तीर्थप्रत्याम्नायाः ॥

## अथ महापातकानि ।

मनुस्मृतौ-"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥" ॥ ब्रह्महत्यासमानि ॥ यथाह-मनुः-"अनृतं च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥" । याज्ञवल्क्यः-"गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥" शातातपः-"गोभूहिरण्यग्रहणे स्त्रीसंबन्धकृतेऽपि वा । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ रागाद्द्वेषात्प्रमादाद्वा स्वतः परत एव वा । ब्राह्मणं घातयेद्यस्तु तमाहुर्ब्रह्मघातकम् ॥ प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयम् । विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥" इति ॥ अथ सुरापानसमानि । मनुस्मृतौ-"ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट् ॥" याज्ञवल्क्यः-निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् । रजस्वलामुखास्वादः सुरापानसमानि षट् ॥" मनुस्मृतावपि-"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेन्नरः ॥" ॥ अथ सुवर्णस्तेयसमानि ॥ मनुस्मृतौ-"निक्षेपस्यापहरणं नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥" याज्ञवल्क्योऽपि-"अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा । निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम् ॥"

अथ गुरुतल्पसमानि । मनुस्मृतौ-"रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥" याज्ञवल्क्योऽपि-"सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च । सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥ पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनी-

माचार्यतनयां तथा ॥ आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः । लिङ्गं छित्वा वधस्तत्र सकामायाः स्त्रिया अपि ॥ " मिताक्षरायां नारदः-" माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यतमां गच्छन्गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते ॥ " इति गुरुतल्पगसमानि । एतच्चतुष्टयान्यतमसंसर्गी पञ्चमः ।

## अथोपपातकानि ।

मनुयाज्ञवल्क्यौ-" गोवधो व्रात्यता स्तेयमृणानां चानपक्रिया । अनाहिताग्निता पण्यविक्रयः परिवेदनम् ॥ भृताद्ध्ययनादानं भृतकाध्यापनं तथा । पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥ स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् । नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ धान्यकूप्यपशुस्तेयमयाज्यानां च याजनम् । पितृमातृसुतत्यागस्तडागारामविक्रयः ॥ कन्यासन्दूषणं चैव परिविन्दकयाजनम् । कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् । स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥ इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् । हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥ शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् । तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥ असच्छास्त्राधिगमनमाकरेष्वधिकारिता । भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥" अथ जातिभ्रंशकराणि । मनुस्मृतौ-" ब्राह्मणस्य रुजःकृत्या घ्रातिरघ्रेयमद्ययोः । जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् " ॥ अथ संकरीकरणम् । मनुः-"खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ " अथापात्रीकरणम् । " निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥" अथ मलिनीकरणम् । "कृमिकीटवेयाहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥" इति ॥

## अथ महापातकप्रायश्चित्तानि ।

यद्यपि महापातकातिपातकेषु मनुविष्णुयाज्ञवल्क्यादिभिः प्राणान्तं प्रायश्चित्तमुक्तम्,तथापि कलियुगीयजीवैस्तत्कर्तुमशक्यत्वात्पराशरव्यासादिभिर्निषिद्धत्वाद्युगधर्मविरुद्धत्वाच्च नानुष्ठेयम् । अतो व्रतजपहोमदानब्राह्मणभोजनतीर्थयात्राकृष्णानुस्मरणादिद्वारा सर्वविधमहापातकादिषु यादृक्प्रायश्चित्तं विधेयं तादृगत्र लिख्यते । अथ ब्रह्मवधप्रायश्चित्तम् । तत्र कामतो ब्राह्मणवधे निष्कृतिर्नास्ति । तथा च मनुः-" इयं विशुद्धिरुदिता प्रमाप्याऽकामतो द्विजम् । कामतो ब्राह्मण-

वधे निष्कृतिर्न विधीयते ॥" प्रायश्चित्तविवेके अङ्गिराः-"यः कामतो महापापं नरः कुर्यात्कथञ्चन । न तस्य शुद्धिर्विज्ञेया वह्नौ प्रपतनादृते ॥ शरीरं न दहेद्यावद्ब्रह्महा पापकृत्तमः । तावत्तस्य न शुद्धिः स्याद्भगवान्मनुरब्रवीत्" ॥ अथाकामतो ब्राह्मणवधे प्रायश्चित्तमाह मनुः-" ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत् । भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥ कृतवापनो निवसेद्ग्रामान्ते गोव्रजेऽपि वा । आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥ ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥ सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा स परिच्छदम् ॥" इति । एतच्च जातिमात्रब्राह्मणवधे ब्राह्मणस्य प्रायश्चित्तम् । तथा च भविष्ये " जातिमात्रं यदा हन्याद्ब्राह्मणं ब्राह्मणो गुह । वेदाभ्यासविहीनो वै धनवानग्निवर्जितः ॥ प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये । धनं वा जीवनायालं गृहं वा सपरिच्छदम् "॥ शंखस्मृतौ-"नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने । अधःशायी जटाधारी पर्णमूलफलाशनः । ग्रामं विशेच्च भिक्षार्थं स्वकर्म परिकीर्त्तयन् ॥ एककालं समश्नीयाद्वर्षे तु द्वादशे गते । हेमस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ॥ व्रतेनैतेन शुद्ध्यन्ते महापातकिनस्त्विमे । व्रतस्थं च द्विजं हत्वा पार्थिवं च कृताश्रमम् ॥ एतदेव व्रतं कुर्याद्द्विगुणं च विशुद्धये । क्षत्रियस्य च पादोनं वधेऽर्द्धं वैश्यघातने ॥ अर्द्धमेव सदा कुर्यात्स्त्रीवधे पुरुषस्तथा । पादं तु शूद्रहत्यायामुदक्यागमने तथा ॥ " याज्ञवल्क्यः-" दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा । दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः ॥ आनीय विप्रसर्वस्वं हृतं घातित एव वा । तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुद्ध्यति ॥ " विष्णुस्मृतौ-" अश्वमेधेन शुद्ध्येयुर्महापातकिनस्त्विमे । पृथिव्यां सर्वतीर्थानां तथानुसरणेन वा ॥" प्रायश्चित्तविवेके च्यवनः-" आसेतुदर्शनात्पूतो भवत्यश्वमेधावभृथस्नानात्पूतो भवत्युभयशिरसं वा प्रदाय ब्राह्मणेभ्यः पूतो भवति " उभयशिरसमुभयतोमुखीं गामित्यर्थः । पराशरस्मृतौ-" चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाहरेत् । वर्जयित्वा विकर्मस्थाञ्छत्रोपानद्विवर्जितः ॥ अहं दुष्कृतकर्मा वै महापातककारकः । गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥ गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च । तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥ एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम् । दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ॥ पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति । सपुत्रः सहभृत्यश्च कुर्याद्ब्राह्मणभोजनम् ॥ गाश्चै-

वैकशतं दद्याच्चातुर्विद्येषु दक्षिणाम् । ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते ॥" तत्रैव धनुष्कोटिनिमज्जने विशेषः । स्कान्दे ब्रह्मखण्डे—"ब्रह्महत्यायुतं चापि सुरापानायुतं तथा । अयुतं गुरुदाराणां गमनं पापकारणम् ॥ स्तेयायुतं सुवर्णानां तत्संसर्गश्च कोटिशः । ब्रह्महत्यासमानानि सुरापानसमानि च ॥ गुरुस्त्रीगमनेनापि यानि तुल्यानि चास्तिकाः । सुवर्णस्तेयतुल्यानि तत्संसर्गसमानि च ॥ तानि सर्वाणि नश्यन्ति धनुष्कोटिनिमज्जनात् । उक्तेष्वेतेषु सन्देहो न कर्त्तव्यः कदाचन ॥ जिह्वाग्रे परशुं तप्तं धारयामि न संशयः । अर्थवादमिमं सर्वं ब्रुवन्वै नारकी भवेत् ॥" इदं तु पादचारेण बहुयोजनादागतस्य विषयेऽस्ति । अध्यात्मरामायणे—"सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् । संस्थाप्य पूजयित्वाह रामो लोकहिताय च ॥ प्रणमेत्सेतुबन्धं यो दृष्ट्वा रामेश्वरं शिवम् । ब्रह्महत्यादिपापेभ्यो मुच्यते मदनुग्रहात् ॥ सेतुबन्धे नरः स्नात्वा दृष्ट्वा रामेश्वरं हरम् । सङ्कल्पनियतो भूत्वा गत्वा वाराणसीं नरः ॥ आनीय गङ्गासलिलं रामेशमभिषिच्य च । समुद्रे क्षिप्ततद्भारो ब्रह्म प्राप्नोत्यसंशयम् ॥" कालिकापुराणेऽपि—"वृत्रं हत्वा ततः शक्रो माहेन्द्रं स्थाप्य शङ्करम् । लिङ्गं विमुक्तः पापौघैस्ततः स त्रिदिवं गतः ॥ रावणं सूदयित्वा तु रामो दाशरथिस्तथा । विमुक्तो ब्रह्महत्यायाः स्थाप्य लिङ्गं सुतेजसम् ॥ अद्यापीन्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं प्रभुम् । मुच्यते ब्रह्महत्याया नरो वै नात्र संशयः ॥" अत्र विशेषो भविष्ये भणितः—"यद्युत्तरे वसेत्पार्श्वे विन्ध्यस्य सुरसत्तम । दक्षिणे वसतश्चेदं न भवेदिति तच्छृणु ॥" लिङ्गस्थापने विशेषो वायुपुराणे—"वेदमातुर्जपान्माघ्यां स्नानाद्रुद्रस्य स्थापनात् । ब्रह्महत्याशतेनापि सद्यो मुक्तो मुनीश्वरः ॥" मुनीश्वरो विश्वामित्रः । "गायत्रीं जपते नित्यं नित्यं माघे जलाप्लुतः ॥ न लिप्यते पातकेन पद्मपत्रमिवाम्भसा ॥ माघ्यां स्नात्वा तु यो दद्यादश्वं लक्षणसंयुतम् । गुरुतल्पाद्विमुक्तः स्यादेवमाह जनार्दनः ॥" प्रायश्चित्तविवेके व्यासः—"प्रायश्चित्तान्यथो वक्ष्ये संक्षेपेण निबोध मे । ब्रह्महाऽब्दत्रयं विप्रो गायत्रीमभ्यसेत्सदा ॥ प्राणायामशतं कुर्यात्प्रत्यहं नियतः शुचिः । भिक्षाशी निवसेन्नित्यमरण्ये संयतेन्द्रियः ॥ षोडश ब्राह्मणान्विप्रो भोजयित्वा समाहितः । प्रयच्छेद्वस्त्रयुग्मानि हिरण्यं चापि शक्तितः ॥" इति । एतत्पतितब्राह्मणवधविषयमिति शूलपाणिः । कैवल्योपनिषदि—"यः शतरुद्रियमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स सुरापानात्पूतो भवति । स गुरुतल्पगमनात्पूतो भवति । स स्वर्णस्तेयात्पूतो भवति । स ब्रह्महत्यायाः पूतो भवति । अकृत्यात्पूतो भवति । अनेन ज्ञानमाप्नोति संसारार्णवतारकम् । तस्मादेवं विदित्वैव कैवल्यमश्नुते" इति । पराशरोऽपि—"मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो

भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥" तत्रैव–" रुद्राध्यायी भवेद्भक्त्या मासमेकमतन्द्रितः । प्रायश्चित्तं भवेदेतद्रहस्यस्य न संशयः ॥ " वृद्धसूर्यारुणसंवादे–"प्रयोगं शृणु गायत्र्याः सर्वकामफलप्रदम् । रहस्यं परमं पुण्यं महापातकनाशनम् ॥ ब्रह्महा कोटिमेकं तु जप्त्वा शुद्धिं समाचरेत् । तथैव पक्षिशार्दूल ।पितृमातृवधोद्यतः ॥ सुवर्णहारी सततं मद्यपश्च विशेषतः । गुरुतल्पगतो यस्तु लक्षं जप्त्वा विशुद्ध्यति ॥ महापातकिनां सङ्गी सोऽपि लक्षात्प्रमुच्यते । गोघ्नः कृतघ्नो बालघ्नः स्त्रीघाती द्विजद्रव्यहृत् ॥ ब्राह्मण्यां च सगोत्रायां व्यभिचारपरो नरः । जप्यमानस्तु सावित्र्या लक्षार्धं शुद्धिमाप्नुयात् ॥ व्यभिचारी स्वगोत्रघ्नः कन्याघातनतत्परः । स्वामिद्रोहादिपापेभ्यस्तदर्धान्मुच्यते ध्रुवम् ॥ परस्वभूमिहरणात्परपीडाप्रदानतः । जीवघातान्महापापादग्निदाहकृतात्तथा ॥ दुष्टप्रतिग्रहात्पापाद्देवभङ्गात्प्रमादतः । कूटसाक्ष्यप्रदानाच्च नित्यलोपादिपापतः ॥ गायत्र्यष्टसहस्रन्तु जप्त्वा शुद्धिं लभेदिह । अशक्तो ब्राह्मणद्वारा जपं कुर्याद्विधानतः ॥ आसनैर्भूषणैर्वस्त्रैः पात्रै रत्नैश्च पूजयेत् । स्वशक्त्या दक्षिणां दद्याद्यथोक्तां कार्यसाधिनीम् ॥ अयुतस्य जपस्यात्र सुवर्णमितिसंयुताम् । यो जप्त्वा विधिना मन्त्रं गायत्र्यास्तु विधानतः । कोटिलक्षं तदर्धं वा होमयेत्स्वदशांशतः ॥ गामेकां कपिलां दद्यात्सर्वस्वार्धं तदर्धकम् । दक्षिणां ब्राह्मणेभ्यश्च स याति परमां गतिम् ॥ आजन्मोपार्जितं पापं त्रिविधं नाशमाप्नुयात् । शोधनं सर्वपापानां प्रयोगमिदमद्भुतम् ॥ अकृत्वा शोधनं चैतत्पङ्के गौरिव सीदति ॥" सहस्रब्राह्मणभोजनान्महापापानां प्रायश्चित्तं भवति । तथा भविष्यपुराणे–"ब्रह्महा च सुरापी च परद्रव्यापहारकः । मातृगामी च गोघ्नश्च परदाररतः सदा ॥ ज्ञानतोऽज्ञानतो वापि पापकारी यथेच्छया । सदाचारविहीनस्तु दमदानविवर्जितः ॥ ईदृशोऽपि द्विजो यः स्यात्सहस्रद्विजभोजनम् । कुरुते सद्य एवेह स पुनाति न संशयः ॥ ब्रह्मानन्दपदं गच्छेत्तेन पुण्येन चैवं हि । सहस्रभोजनाच्चैव नानाविधमनोरथान् । भुंक्ते सकामान्सकलान्भोगानपि च पुष्कलान् ॥" अथ ब्रह्मवधे संक्षेपतो व्यवस्था । कामतो ब्राह्मणकर्तृकब्राह्मणवधे याज्ञवल्क्योक्तेन प्रकारेण मरणं चतुर्विंशति वार्षिकं वा व्रतम् । अकामतो मनुप्रोक्तं द्वादशवार्षिकं व्रतं कर्त्तव्यम् । तच्च द्वादश दिनान्येकैकप्राजापत्यस्यान्ते त्र्यहमुपवासोऽधिकस्तथाप्यत्र वनवासजटाधारणवन्याहारत्वादिरूपतपोविशेषयुक्तत्वादुपवासाभावेऽप्येकैकस्य द्वादशाहस्य प्राजापत्यतुल्यम् । ततश्च " प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्विचक्षणः । गवामभावे दातव्यं तन्मूल्यं वा न संशयः ॥"इति वाक्येन प्रतिप्राजापत्यमेकैकस्यां धेन्वां दीयमानायां धेनूनामपि षष्ट्यधिकं शतत्रयं भवति । मूल्यं च यथाशक्ति देयम् । अत

एव पराशरमाधवभाष्ये ब्राह्मे च -"गवामभावे निष्कं स्यात्तदर्द्धं पादमेव वा" इति वाक्येन प्रतिधेनुमूल्यं निष्कं रजतं देयम्। अत्यशक्तौ निष्कार्धं निष्कपादं वा रजतं गोमूल्यं देयं नतु न्यूनम्। (अष्टगुञ्जात्मकमाषरीत्या चत्वारिंशन्माषो निष्कः।) यत्र यावत्संख्यानि प्राजापत्यान्यावर्त्तनीयानि भवन्ति तावत्संख्यया गोदानान्यावर्त्तनीयानि। इति ब्रह्महत्याप्रायश्चित्तम्॥

अथ सुरापानप्रायश्चित्तम्। तत्र तावत्तत्पानं महापातकमिति निरूप्यते। प्रायश्चित्तविवेके मनुहारीतयमाः-"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥" तथा च श्रुतिः-"सुरा वै मलमन्नानामनृतं पाप्मातमः सुरा" इति। सुरा त्रिविधा। तथा च मनुहारीतौ "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः"। यमस्मृतौ-" एका माध्वी च पैष्टी च गौडी च विविधा सुरा। द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचित्॥" सुरामद्ययोर्भेदमाह पुलस्त्यः "पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। माध्वीकं टांकमाध्वीकमैरेयं नारिकेरजम्॥ समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्॥" तत्र ज्ञानतो ब्राह्मणस्य पैष्टीसुरापाने द्विरभ्यस्तगौडीमाध्वीपाने च अग्निसमस्पर्शानां सुरागोमूत्रजलदुग्धघृतगोमयरसानामन्यतमस्यामरणात् पानम्। चतुर्विंशतिवार्षिकव्रतं वा कार्यम्। तथा च मनुः-"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः॥ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा। पयो घृतं वामरणाद्गोशकृद्रसमेव वा॥" अज्ञानतो ब्राह्मणस्य तासां पाने द्वादशाब्दिकव्रतम्। तथा च प्रायश्चित्तविवेके शङ्खः-"अधःशायी जटाधारी पर्णमूलफलाशनः। एककालं समश्नानो वर्षे तु द्वादशे गते॥ रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः। व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे॥"तत्रैव मनुः-कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि। सुरापानानुपत्त्यर्थं वालवासा जटी ध्वजी॥"बृहस्पतिः-"गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकं वा चान्द्रायणमनुक्रमात्॥ विप्रस्य कामनया सकृन्मद्यभक्षणे पराशरो यथा-" अगम्यागमने चैव मद्यगोमांसभक्षणे। शुद्ध्यै चान्द्रायणं कुर्यान्नदीं गत्वा समुद्रगाम्॥ चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्। अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम्॥" अकामतः सकृत् पाने विष्णुः-"पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद्द्विजः। कारयेत्पुनःसंस्कारं भक्त्या विप्रांश्च भोजयेत्॥" मनुस्मृतौ-" अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः। वपनं मेखला दण्डो भैक्षचर्या व्रतानि च। निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि॥" सकृद्गौणसुरापाने

माधवभाष्ये अङ्गिराः—" भूमिप्रदानं वा कुर्यात्सुरां पीत्वा द्विजोत्तमः। पुनर्न च पिबेज्जातु संस्कृतः स विशुद्ध्यति ॥ " मद्यपाने निन्दामाह महाभारते शुक्रः—" यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात्सुरां पास्यति मन्दबुद्धिः। अपेतधर्मा ब्रह्महा चैव स स्यादस्मिँल्लोके गर्हितः स्यात्परे च ॥ " मनुस्मृतावपि—" यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्। तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति ॥ " ज्ञानतः क्षत्रियस्य पैष्टीसुरापाने अष्टादशवार्षिकव्रतम्। अज्ञानतः क्षत्रियस्य पैष्टीसुरापाने नववार्षिकव्रतम्। अज्ञानतो वैश्यस्य पैष्टीसुरापाने षाड्वार्षिकव्रतम्। ज्ञानत एतद्विगुणं कार्यम्। स्त्रीबालवृद्धानामर्द्धादिकं कार्यम्। अनन्यौषधसाध्यव्याध्युपशमनार्थं सुरापाने त्वज्ञानकृते त्रैमासिकमब्दपादं चान्द्रायणं वा कृत्वा पुनरुपनयनम्। मद्यपाने तु तथा कृते तप्तकृच्छ्रसहितः पुनःसंस्कारः। मत्स्यसूक्ते विशेषः—" पैष्टीपाने ब्राह्मणस्य मरणान्तिकमुच्यते। माध्वीगौडीसुरापाने द्वादशाब्दं विधीयते॥ इतरेषां तु पानेन शुद्धिश्चान्द्रायणेन तु। मुखप्रवेशमात्रे तु प्रायश्चित्तार्द्धमाचरेत् ॥ अनुपनीतो देवेशि व्रतं त्रैवार्षिकं चरेत्। राजन्यवैश्ययोश्चापि गौडी मध्वी न शस्यते॥ मोहात्क्षत्रश्च वैश्यश्च पीत्वा कृच्छ्रद्वयं चरेत्। शूद्रोऽपि गौडीं पैष्टीं च न पिबेद्धीनसंस्कृताम् ॥ कामात्पीत्वा सुरां विप्रो मरणान्तिकमाचरेत्। चरेच्चान्द्रायणं ज्ञानात्क्षत्रियो वैश्य एव च ॥ पैष्टीपाने तु शूद्रस्य प्राजापत्यं विनिर्दिशेत्। नारिकेलं तथा ज्ञानाद्विप्रश्चान्द्रायणेन तु ॥ क्षत्रियश्चैव वैश्यश्च प्राणायामेन शुद्ध्यति ॥ " इति ॥ सुरापानप्रायश्चित्तम्।

## अथ सुवर्णस्तेयप्रायश्चित्तम्।

अज्ञानतो ब्राह्मणकर्तृकब्राह्मणस्वामिकाशीतिरक्तिकापरिमितसुवर्णस्तेये अपहृतद्रव्यं तस्यानुरूपं मूल्यं वा स्वामिने दत्त्वा द्वादशवार्षिकव्रतं करणीयम्। ज्ञानतः कृते एतद्विगुणं चतुर्विंशतिवार्षिकव्रतं गुणवद्ब्राह्मणकर्तृके तु सर्वत्रार्द्धम्। ज्ञानतः क्षत्रियवैश्यशूद्रकर्तृकब्राह्मणस्वामिकाशीतिरक्तिकापरिमितसुवर्णस्तेये राजकर्तृकमुसलाघातेन मरणम्। चतुर्विंशतिवार्षिकं वा व्रतं करणीयम्। अज्ञानतस्तत्कर्तृकतत्स्वामिकतत्सुवर्णस्तेये द्वादशवार्षिकव्रतम्। स्त्रीबालवृद्धातुराणामर्द्धम्। एकस्योभयधर्मत्वे पादः। अशीतिरक्तिकान्यूनपरिमाणेषु हेमसु व्रतभेदाः पराशरमाधवभाष्ये षट्त्रिंशन्मते दर्शिताः " बालाग्रमात्रेऽपहृते प्राणायामं समाचरेत्। लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः ॥ राजसर्षपमात्रे च प्राणायामचतुष्टयम्। गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये ॥ गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत्। यवमात्रसुवर्णस्य प्रायश्चित्तं दिनद्वयम् ॥ सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः। कुर्यात्सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥

अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः । गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुद्ध्यति ॥ सुवर्णस्यापि हरणे वत्सरं यावको भवेत् । ऊर्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महाव्रतम् ॥" तत्रैव चतुर्विंशतिमते–" आत्मतुल्यं सुवर्णं वा दद्यादिष्ट्वाथवा क्रतुम् । षडब्दं वा चरेत्कृच्छ्रं जपयज्ञपरायणः ॥ तीर्थाभिगमने विद्वांस्तस्मात्स्तेयात्प्रमुच्यते । तत्रात्मतुल्यसुवर्णदानमित्यत्यन्तधनिकविषयकम् । क्रतुर्धनिकश्रोत्रियविषयः ॥ षड्वार्षिकं तु तीर्थयात्रासहितं निर्द्धनश्रोत्रियविषयमिति (माधवभाष्ये स्तेयप्रायश्चित्तं सर्वत्रापहृतं धनं स्वामिने दत्त्वैव कार्यम्) तथाच स्मृतिः–"स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः । स्वामिनेऽपहृतं देयं हर्त्रा त्वेकादशाधिकम्॥" बृहद्विष्णुस्मृतौ–" दत्त्वैवापहृतं द्रव्यं धनिकस्याप्युपायतः । प्रायश्चित्तं ततः कुर्यात्कल्मषस्यापनुत्तये " गारुडेऽपि" ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः । सेतुं दृष्ट्वा विशुद्ध्यन्ते तत्संयोगी च पञ्चमः॥ ततो धेनुशतं दद्याद्ब्राह्मणानां तु भोजनम् ॥ " मनुस्मृतौ–" तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम् । चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः । गुरुस्त्रीगमनीयं तु व्रतैरेभिरपानुदेत् ॥ " इति सुवर्णस्तेयप्रायश्चित्तम् ॥

## अथ गुरुतल्पगमनप्रायश्चित्तम् ।

गुरुरत्र पिता तल्पस्तत्पत्नीगमनं चात्र रेतःसेकपर्यन्तं चेन्महापातकम् । ततोऽर्वाङ्निवृत्तौ त्वनुपातकम् । ज्ञानतो गुर्वङ्गनागमने–अर्थाद्विमातृगमने शूद्रस्य ब्राह्मणीगमने च स्वपापमभिभाष्य तप्ते लोहमये स्वप्यात् । ज्वलन्तीं लोहप्रतिमां मृण्मयीं प्रतिमां वा आलिङ्ग्य म्रियेत । स्वयं वा क्षुरेण सलिङ्गौ वृषणावुत्कृत्य अञ्जलौ निधाय आमरणात् नैर्ऋतीं दिशमातिष्ठेत् । तदशक्तौ चतुर्विंशतिवार्षिकव्रतं वा कुर्यात् । गुर्वङ्गनयाप्येतत् कर्त्तव्यम् । अज्ञानतो गुर्वङ्गनागमने द्वादशवार्षिकव्रतम् । बालवृद्धयोरर्द्धम् । एतच्चातुर्वर्ण्यविषयमिति । तथाच मनुः– "गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये । सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति । स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ । नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥" अज्ञानकृते तु मिताक्षरायां शङ्खेन द्वादशवार्षिकं व्रतमुक्तम् । "अधःशायी जटाधारी पर्णमूलफलाशनः । एककालं समश्नीत वर्षे तु द्वादशे गते ॥ रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः । व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे ॥"याज्ञवल्क्यः–"प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः । चान्द्रायणं वा त्रीन् मासानभ्यसेद्वेदसंहिताम् ॥ " मनुस्मृतौ–"खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने । प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः ॥ चान्द्रायणं वा त्रीन्मासानभ्यसेन्नियतेन्द्रियः । हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये॥" इति । तदज्ञानतो व्यभिचारिणीगुरुपत्नीगमनविषयमिति प्रायश्चित्तविवेकः ॥

## अथ मात्रादिगमनप्रायश्चित्तम् ।

तत्राऽज्ञानकृते मात्रादिगमने प्रायश्चित्तमाह पराशरः-" मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा । एतासु मोहितो गत्वा त्रीणि कृच्छ्राणि सञ्चरेत् ॥ चान्द्रायणत्रयं कुर्याच्छिश्नच्छेदेन शुद्ध्यति ॥ " इति । एतत्पक्षत्रयं लघुमध्यगुरुपातकप्रायश्चित्तविषयम् । अकामकृते मातृष्वसृगमने प्रायश्चित्तमाह पराशरः- "अज्ञानेन तु यो गच्छेत्कुर्याच्चान्द्रायणद्वयम् । दश गोमिथुनं दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥" माधवीयभाष्ये बृहन्मनुः-" चाण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम् । मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम् ॥ मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम् । शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत्॥" तत्रैव चतुर्विंशतिमते-"पितृव्यभ्रातृभार्यां च भगिनीं मातुरेव च । श्वश्रूमारोह्य धात्रीं च तप्तकृच्छ्रं समाचरेत् ॥" तत्रैव संवर्त्तोऽपि-"भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् । एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्रं समाचरेत् ॥ " जननीव्यतिरिक्तपितृभार्यागमने प्रायश्चित्तमाह पराशरः-"पितृदारान्समारुह्य मातुराप्तां तु भ्रातृजाम् । गुरुपत्नीं स्नुषां चैव भ्रातृभार्यां तथैव च ॥ मातुलानीं सगोत्रां च प्राजापत्यत्रयं चरेत् । गोद्वयं दक्षिणां दद्याच्छुद्ध्यते नात्र संशयः ॥" इति । मातुराप्ता मातुःप्रियसखी । एतत्सर्वमज्ञानतः सकृद्विषयम् । कामतस्त्वग्निप्रवेशः । तदुक्तं पराशरमाधवीयभाष्ये-" मातरं गुरुपत्नीं च स्वसारं स्वसुतां तथा । गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥" प्रायश्चित्तविवेके बृहद्विष्णुस्मृतिः- "मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ॥ अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् । न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन ॥" इति । पुरुषवच्च स्त्रीणामपि प्रायश्चित्तं कार्यम् । तदुक्तं मिताक्षरायां कात्यायनेन-"एष दोषश्च शुद्धिश्च पतितानामुदाहृता । स्त्रीणामपि प्रसक्तानामेष एव विधिःस्मृतः ॥" इति । अतस्तासामपि कामतः प्रवृत्तौ मरणान्तिकं याज्ञवल्क्येन प्रायश्चित्तं प्रोक्तम् । अकामस्तु मनुनोक्तम्-"एतदेव व्रतं कार्यं योषित्सु पतितास्वपि । " इतिद्वादशवार्षिकमेवार्द्धकल्पनया कार्यम् । इतिगुरुतल्पगमनप्रायश्चित्तम् ॥

## अथ पतितसंसर्गप्रायश्चित्तम् ।

यस्तु पतितब्रह्महादिभिः सह संवत्सरं संसर्गं करोति स स्वयमपि पतितस्तस्य प्रायश्चित्तं मनुराह-"यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्संसर्गस्य विशुद्धये ॥" इति । एतद्युगान्तरविषयमिति हेमाद्रिः । भगवता पराशरेणापि कलियुगे संसर्गदोषाभावमभिप्रेत्य संसर्गप्रायश्चित्तं नाभ्यधात् ।

अतएव स्मृत्यर्थसारे कलौ वर्ज्यानामनुक्रमणे 'संसर्गदोषः पापेषु' इत्युक्तम्। हेमाद्रौ स्मृतिकामधेनौ च " संसर्गदोषो नैव स्यान्महापातकिनः कलौ । संसर्गदोषस्तेनाद्यैर्महापातकनिष्कृतिः ॥ " पद्मपुराणेऽपि-"इत्थं ह्यदत्तान्यपि पुण्यपापान्यायान्ति नित्यं परसंचितानि । कलौ त्वयं वै नियमो न कार्यः कर्त्तैव भोक्ता खलु पुण्यपापयोः ॥ कलौ ज्ञानं दृढं नास्ति कलौ गर्वेण सत्क्रिया । कलौ दम्भान्वितो योगो नश्यत्येव न संशयः ॥ देशग्रामकुलानि स्युर्भोगभाञ्जि कृतादिषु । कलौ तु केवलं कर्त्ता फलभुक् पापपुण्ययोः ।" पराशरोऽपि-"त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥" कर्त्तारं तु कलौ युगे इत्यनेन कर्तृसंसर्गस्य निषिद्धत्वात्तत्कर्त्ता कलावपि पापी भवति न तु पतितो भवति । पतनन्तु स्वयंकृते वधादिकर्म्मणैवेति भावः । तत्रैव-"कृते सम्भाषणात्पापं त्रेतायां स्पर्शनेन तु । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥" इति । यद्यपि संसर्गदोषस्य पातित्यापादकत्वाभावेऽपि पापमात्रापादकत्वमस्तीत्याह पराशरः । "आसनाच्छयनाद्यानात्सम्भाषात्सहभोजनात् । संक्रामन्तीह पापानि तैलविन्दुरिवाम्भसि ॥" इति । अस्य प्रायश्चित्तमुक्तं पराशरेण-"चान्द्रायणं यावकं च तुलापुरुष एव च । गवां चैवानुगमनं सर्वपापप्रणाशनम् ॥" इति । तुलापुरुषः कृच्छ्रविशेषः । तदुक्तं विष्णुना-"पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् । उपवासान्तराभ्यासात्तुलापुरुष उच्यते ॥" इति । एकैकदिनेषूपवासपूर्वमेतानि भक्षयेत् । एतच्च दशदिनसाध्यम् । प्रायश्चित्तविवेके बृहस्पतिः- "षाण्मासिके तु संयोगे याजनाध्यापनादिना । एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत् ॥ पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च । मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥" इति । 'मासोपवासो ज्ञानाभ्यासे तत्र च पञ्चदश धेनवः । चान्द्रायणमज्ञानाभ्यासे तेन सार्धं सप्त धेनवः' इति शूलपाणिः ॥

## अथ बलात्कारेण म्लेच्छीकृतानां द्विजानां प्रायश्चित्तम् ।

अत्रिस्मृतौ-" राजन्यैः श्वपचैर्वापि बलाद्विचलितो नरः । पुनः कुर्वीत संस्कारं पश्चात्कृच्छ्रत्रयं चरेत् ॥ " इति । कृच्छ्रत्रयं प्राजापत्यत्रयमेव कुर्यात् । नतु तत्प्रतिनिधिधेनुदानादिद्वारा कार्यमित्यर्थः । देवलस्मृतौ-" अपेयं येन संपीतमभक्ष्यं चापि भक्षितम् । म्लेच्छैर्नीतेन विप्रेण अगम्यागमनं कृतम् ॥ तस्य शुद्धिं प्रवक्ष्यामि यावदेकं तु वत्सरम् । चान्द्रायणन्तु विप्रस्य सपराकं प्रकीर्त्तितम् ॥ पराकमेकं क्षत्रस्य पादकृच्छ्रेण संयुतम् । पराकार्द्धन्तु वैश्यस्य शूद्रस्य दिनपञ्चकम् ॥ नखलोमविहीनानां प्रायश्चित्तं प्रदापयेत् । चतुर्णामपि वर्णानामन्यथाऽशुद्धिरस्ति हि ॥ प्रायश्चित्तविहीनन्तु सदा तेषां कलेवरम् । कर्त्तव्यस्तत्र संस्कारो मेखलादण्डवर्जितः ॥ संस्कारान्ते च विप्राणां दानं धेनुश्च दक्षिणा । दातव्यं

शुद्धिमिच्छद्भिरश्वगोभूमिकाञ्चनम् ॥ अथ संवत्सरादूर्ध्वं म्लेच्छैर्नीतो यदा भवेत् । प्रायश्चित्ते तु संचीर्णे गङ्गास्नानेन शुद्ध्यति ॥ बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः । अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥ उच्छिष्टमार्जनं चैव तथा तस्यैव भोजनम् । खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् । तत्स्त्रीणां च तथा सङ्गं ताभिश्च सहभोजनम् ॥ मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् । चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत् ॥ चान्द्रायणं पराकं च चरेत्संवत्सरोषितः । संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत् ॥ मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुद्ध्यति । ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः॥संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति । बलान्म्लेच्छैस्तु यो नीतस्तस्य शुद्धिस्तु कीदृशी ॥ संवत्सरोषिते विप्रे शुद्धिश्चान्द्रायणेन तु । पराकं वत्सरार्धे च पराकार्द्धं त्रिमासिके । मासिके पादकृच्छ्रश्च नखरोमविवर्जितः । पादोनं क्षत्रियस्योक्तमर्द्धं वैश्यस्य दापयेत् ॥ प्रायश्चित्तं द्विजस्योक्तं पादं शूद्रस्य दापयेत् । प्रायश्चित्तावसाने तु दोग्ध्री गौर्दक्षिणा मता ॥ तथासौ तु कुटुम्बान्ते ह्युपविष्टो न दुष्यति । अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ॥ प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वान्योऽपि वान्धवः । म्लेच्छैर्हृतानां चौरैर्वा कान्तारेषु प्रवासिनाम् । भुक्त्वा भक्ष्यमभक्ष्यं वा क्षुधार्तेन भयेन वा॥ पुनः प्राप्य स्वकं देशं चातुर्वर्ण्यस्य निष्कृतिः॥ कृच्छ्रमेकं चरेद्विप्रस्तदर्द्धं क्षत्रियश्चरेत् ॥ पादोनं च चरेद्वैश्यः शूद्रः पादेन शुद्ध्यति । गृहीतो यो बलान्म्लेच्छैः पञ्च षट् सप्त वा समाः ॥ दशादिविंशतिं यावत्तस्य शुद्धिर्विधीयते ॥ प्राजापत्यद्वयं तस्य शुद्धिरेषा विधीयते । अतः परं नास्ति शुद्धिर्यस्तु म्लेच्छैः सहोषितः ॥ पञ्च सप्ताष्ट दश वा द्वादशाहोऽपि विंशतिः । म्लेच्छैर्नीतस्य विप्रस्य पञ्चगव्यं विशोधनम् " ॥

## अथ म्लेच्छैर्नीतानां स्त्रीणां प्रायश्चित्तम् ।

देवलस्मृतौ–" अतः परं प्रवक्ष्यामि प्रायश्चित्तमिदं शुभम् । स्त्रीणां म्लेच्छैश्च नीतानां बलात्संवेशने क्वचित्॥ ब्राह्मणी क्षत्रिया वैश्या शूद्रा नीता यदान्त्यजैः । ब्राह्मणाः कीदृशं न्याय्यं प्रायश्चित्तं विधीयते ॥ ब्राह्मणी भजते म्लेच्छमभक्ष्यं भक्षयेद्यदि । पराकेण ततः शुद्धिः पादेनोत्तरतोत्तरान् ॥ न कृतं मैथुनं ताभिरभक्ष्यं नैव भक्षितम् । शुद्धिस्तदा त्रिरात्रेण म्लेच्छान्ने नैव भक्षिते ॥ गृहीता स्त्री बलादेव म्लेच्छैर्गुर्वीकृता यदि । गुर्वी न शुद्धिमाप्नोति त्रिरात्रेणेतरा शुचिः ॥ येषां गर्भं विधत्ते या म्लेच्छात्कामादकामतः । ब्राह्मणी क्षत्रिया वैश्या शूद्रा वर्णेतरा च या ॥ अभक्ष्यभक्षणं कुर्यात्तस्याः शुद्धिः कथं भवेत् । कृच्छ्रं सान्तपनं

शुद्धिर्घृतैर्योनेश्च पावनम्॥ असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते । अशुद्धा सा भवेन्नारी यावच्छल्यं न मुञ्चति ॥ विनिःसृते ततः शल्ये रजसो वापि दर्शने । तदा सा शुद्धयते नारी विमलं काञ्चनं यथा ॥ स गर्भो दीयतेऽन्यस्मै स्वयं ग्राह्यो न कर्हिचित् । स्वजातौ वर्जयेद्यस्मात्संकरः स्यादतोऽन्यथा ॥ " अत्रिस्मृतौ- " सकृद् भुक्ता तु या नारी म्लेच्छैर्वा पापकर्मभिः । प्राजापत्येन शुद्धयेत ऋतुप्रस्रवणेन तु ॥ वलाद्धृता स्वयं वापि परप्रेरितया यदि । सकृद् भुक्ता तु या नारी प्राजापत्येन शुद्धयति ॥ प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तेन तद्व्रतं तासां विनश्यति कदाचन ॥ पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः । भुञ्जन्ते मानवाः पश्चान्न ता दूष्यंति कर्हिचित् ॥"

## अथ पतितनीचादिसंसर्गप्रायश्चित्तम् ।

मनुस्मृतौ-"एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः । पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः॥ संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौतान्न तु यानासनाशनात् ॥ यो येन पतितेनैषां संसर्गं याति मानवः । एतस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥ " उशनःस्मृतौ-"पतितेन तु संस्पर्शं लोभेन कुरुते द्विजः । सकृत्पापापनोदार्थं तस्यैव व्रतमाचरेत् ॥तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः । षाण्मासिकेऽथ संसर्गे प्रायश्चित्तार्धमाचरेत्॥"संवर्त्तस्मृतौ- "पतितेन तु सम्पर्कं मासं मासार्द्धमेव वा । गोमूत्रयावकाहारो मासार्द्धेन विशुद्धयति ॥ पतिताद्द्रव्यमादत्ते भुंक्ते वा ब्राह्मणो यदि । कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं चरेद्द्विजः॥ "पाराशरस्मृतौ-"यो वै समाचरेद्विप्रः पतितादिष्वकामतः । पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ मासार्धं मासमेकं वा मासद्वयमथापि वा । अब्दार्द्धमब्दमेकं वा भवेदूर्ध्वं हि तत्समः ॥ त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् । तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥ चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे ततः । कुर्याच्चान्द्रायणं षष्ठे सप्तमे चैन्दवद्वयम् ॥ शुद्धयर्थमष्टमे चैव षाण्मासात्कृच्छ्रमाचरेत् । पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥" इति पञ्चमहापातकप्रायश्चित्तानि ॥

## अथोपपातकप्रायश्चित्तम् ।

तत्रतावद्गोवधप्रायश्चित्तम् । बृहत्पाराशरे-" अथ गोघ्नस्य वक्ष्यामि निष्कृतिं श्रोतुमर्हथ । यथा यथा विपत्तिः स्याद्गवां तथा तथोच्यते ॥ गोघाती पञ्चगव्याशी गोष्ठशायी च गोनुगः । मासमेकं व्रतं चीर्त्वा गोप्रदानेन शुद्धयति ॥ चौरव्याघ्रादिकेभ्यश्च सर्वप्राणैः समुद्धरेत् । गर्तप्रपातपङ्काच्च तथान्यत्रोपकारतः ॥ भोजयेद्ब्राह्मणान्पश्चात्पुष्पधूपादिपूर्वकान् । दद्याद्गां वृषभं चैकं ततः शुद्धयेत्

स किल्बिषात् ॥" याज्ञवल्क्योऽपि-" पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयमी। गोष्ठेशयो गोनुगामी गोप्रदानेन शुद्ध्यति ॥ कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः । दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः ॥"मनुस्मृतौ- "उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्। कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥ चतुर्थकालमश्नीयादक्षारलवणं मितम्। गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्ध्वं रजः पिबेत्। शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥ तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्। आसीनासु तथासीनो नियतो वीतमत्सरः ॥ आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः। पतितां पङ्कलग्नां वा सर्वोपायैर्विमोचयेत् ॥ उष्णे वर्षति शीते वा मारुते वापि वा भृशम्। न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले। भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् ॥ अनेन विधिना यस्तु गोघ्नो गामनुगच्छति। स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥ वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः । अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥ एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः । अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥ प्रायश्चित्तविवेके बृहस्पतिः-"शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत्। रोधादिना त्वाङ्गिरसमापस्तम्बोक्तमेव वा ॥" इति । आदिशब्दान्मुष्टिलोष्ट्र-लगुडविषाग्नीनां प्रायिकमृत्युफलकानां ग्रहणम्। रोधादिनेति यथाकथंचिन्निमित्त-मात्रस्य बन्धनादेश्च ग्रहणम्। आङ्गिरसस्मृतौ-"दमने दामने रोधे अवघाते च वैकृते। गवां प्रभवतां घातैः पादोनं व्रतमाचरेत् ॥ शृङ्गभङ्गे त्वस्थिभङ्गे चर्मनि-र्मोचने तथा । दशरात्रं चरेत्कृच्छ्रं यावत्स्वस्था भवेत्तदा ॥ गोमूत्रेण तु सम्मिश्रं यावकं चोपजायते। एतदेव हितं कृच्छ्रमित्थमाङ्गिरसा स्मृतम् ॥" आपस्तम्ब-स्मृतौ-"पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत्। योजने पादहीनं च चरेत्सर्वं निपातने ॥ दमने वा निरोधे वा सङ्घाते चैव योजयेत् । स्तम्भशृङ्खलपाशैश्च मृते पादोनमाचरेत् ॥ पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात्। निपातयन्ति ये गास्तु तेषां सर्वं विधीयते ॥ त्र्यहं निरशनात्पादः पादश्चायाचितं त्र्यहम्। पादः सायं त्र्यहं पादः प्रातर्भोज्यं तथा त्र्यहम् ॥ प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत्। अयाचितन्तु राजन्ये त्रिरात्रं ब्राह्मणस्य च ॥" गोमृत्युस्था-नानि बृहत्पराशरे-"मुनयः केचिदिच्छन्ति विचित्रासु विपत्तिषु। यथासम्भ-वतस्तासु निष्कृतीश्च पृथक् पृथक् ॥ शस्त्रवस्त्राश्ममृत्पिण्डयष्टिमुष्टिप्रघातनम्। योक्त्रणं तारणं रोधं बन्धनं विद्युदग्नयः ॥ गृहकुड्यप्रपातश्च बद्धव्याघ्रादिभक्षणम्। क्षुत्तृड्रोगचिकित्सासु तथातिदोहवाहने॥मृत्युस्थानानि चैतानि गवामार्तप्रधावनम्।

प्राब्रवीत्पृथगेतेषु प्रायश्चित्तं पराशरः॥ उपेक्षणे च पङ्कादौ तथोपविषभक्षणे। वक्ष्यमाणक्रमेणैतच्छृणुध्वं द्विजसत्तमाः॥ शस्त्रेण त्रीणि कृच्छ्राणि तदर्धं वा समाचरेत्। अश्मना द्वे चरेत्कृच्छ्रे मृत्पिण्डेनापि कृच्छ्रकम्॥ यष्ट्या तु द्वे चरेत्कृच्छ्रे साक्षान्मुष्ट्या तु तच्चरेत्। योक्त्रणे पादमेकं तु तारणे पादमेव तु॥ रोधने कृच्छ्रपादे द्वे कृच्छ्रमेकन्तु बन्धने। कूपपाते चरेत्कृच्छ्रमर्द्धं वाप्यां समाचरेत्॥ गोशकृत्पिण्डघाते च प्राजापत्यं चरेद्द्विजः। क्षुत्तृड्रोगचिकित्सासु कृच्छ्रमुत्प्रेक्षणे चरेत्॥ पतितां पङ्कलग्नां गामवलग्नां च यो नरः। स्वस्य वान्यस्य वोत्प्रेक्ष्य सोऽर्द्धकृच्छ्रं चरन् शुचिः॥ एका चेद्बहुभिर्बद्धा क्ष्वेडिता चेन्म्रियेत गौः। पादं पादं चरेयुस्ते प्राह पाराशरो मुनिः॥ सुबद्धां येऽवलग्नां गां पश्यन्तो नोपकुर्वते। घातनोत्प्रेक्षणं प्रोक्तं चरेयुस्ते व्रतं नराः॥ या गर्तादौ विपद्येत क्ष्वेडिता संप्रपद्य वा। पादं क्ष्वेडितयोरुक्तं तत्कर्त्ता व्रतमाचरेत्॥ प्रबद्धा रज्जुदोषेण गौर्विपद्येत यस्य सः। व्रतपादं चरेच्छुद्ध्यै किंचिद्दद्याच्च दक्षिणाम्॥ यो गामपालयन्दुह्यादत्यर्थं वाहयेद्वृषम्। यदा म्रियेत तद्दोषात्तदा कृच्छ्रार्द्धमाचरेत्॥ घासं यो न क्षुधार्त्तस्य तृषार्त्तस्य न वा जलम्। स्वीकृतस्य न चेद्दद्यात्स तत्पादव्रतं चरेत्॥ एकपादे तु लोमानि द्वाभ्यां श्मश्रु निकृन्तयेत्। पादत्रये शिखावर्जं सशिखं तु निपातने॥ सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्। गवां मध्ये वसेद्रात्रौ दिवा गाः समनुव्रजेत्॥ तिष्ठन्तीभिश्च तिष्ठेत्तु व्रजन्तीभिः सह व्रजेत्। शृङ्गकर्णादिसंयुक्तं चर्मोत्कृत्य तदावृतः॥ विप्रौकस्सु चरेद्भिक्षां स्वकर्म ख्यापयन् व्रती। गोघ्नस्य देहि मे भिक्षामिति वाचमुदीरयेत्॥ मासमेवं व्रती चीर्त्वा गोप्रदानाद्विशुद्ध्यति॥" अथ गोवधापवादोऽपि। तत्रैव—"या च बद्धा, चिकित्सार्थं विशल्यकरणाय च। औषधादिप्रदानाय विपत्तौ नास्ति पातकम्॥ विद्युत्पाताग्निदाहाभ्यां कुड्यस्य पतनादिभिः। गोभिर्विपत्तिमापन्नैस्तत्र दोषो न विद्यते॥ पालस्य पश्यतोऽरण्ये गौस्तु व्याघ्रादिभिर्हता। अकुर्वतः प्रतीकारं कृच्छ्रार्द्धं तस्य पावनम्॥ शृण्वत्स्वन्येषु पालेषु तथान्यारण्यगामिषु। पाले संघोषयत्युच्चैर्हता तत्र न दोषभाक्॥ गर्भिणी गर्भशल्या तु तद्गर्भन्तु विशल्यतः। यत्नतो गौर्विपद्येत तत्र दोषो न विद्यते॥ गर्भस्य पातने पादो द्वौ पादौ गात्रसम्भवे। पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्॥ अङ्गप्रत्यङ्गसंभूते तद्गर्भे चेतनान्विते। द्विगुणं गोव्रतं कुर्यादेषा गोघ्नस्य निष्कृतिः॥ वस्त्राद्युत्रासने गौश्च गलदाम्नैकदोषतः। पादयोर्बन्धने चैव पादोनं व्रतमाचरेत्॥ घण्टाभरणदोषेण गौश्चेद्बन्धनमाप्नुयात्। चरेदर्धव्रतं चैव भूषणार्थं कृतं यतः॥ गोविपत्तावघाशङ्का कुर्याद्यो नैव निष्कृतिम्। स तद्गोरोमतुल्यानि नरकान्याविशेत्समाः॥ यः स्नात्वा पापसंभीतो विप्राराधनतत्परः। तद्दत्तां निष्कृतिं कुर्याद्व्रतेनाः शुभमश्नुते।" संवर्त्तस्मृतौ—"गोघ्नः कुर्वीत संस्थानं गोष्ठे गोरुपसन्निधौ। तत्रैव

क्षितिशायी स्यान्मासार्द्धं संयतेन्द्रियः ॥ स्नानं त्रिषवणं कुर्यान्नखलोमविवर्जितः । सक्तुयावकपिण्याकपयोदधिशकृन्नरः॥ एतानि क्रमशोऽश्नीयाद्विजस्तत्पापमोक्षकः । गायत्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ॥ पूर्णे चैवार्द्धमासे च स विप्रान्भोजयेद्द्विजः । भुक्तवत्सु च विप्रेषु गां च दद्याद्विचक्षणः ॥ " पराशरमाधवेऽप्याह वृद्धप्रचेताः-"एकवर्षे हते वत्से कृच्छ्रपादो विधीयते । अबुद्धिपूर्वे पुंसां स्याद्विपादस्तु द्विहायने ॥ त्रिहायने त्रिपादः स्यात्प्राजापत्यमतः परम्॥" तत्रैव विश्वामित्रः-"कृच्छ्रांश्च चतुरः कुर्याद्गोवधे बुद्धिपूर्वके । अमत्या तु द्वयं कुर्यात्तदर्धं वृद्धबालयोः॥" तत्रैव व्याघ्रपादः-"गाश्चेद्धन्यान्नरोऽकामात्पणसप्तशतं तथा । श्रोत्रियाय दरिद्राय दद्याच्छुद्ध्यर्थमात्मनः ॥ " बृहस्पतिः-"गर्भिणीं कपिलां दोग्ध्रीं कामधेनुं च सुव्रताम् । रोधादिना घातयित्वा द्विगुणं व्रतमाचरेत् ॥ अतिवृद्धामतिकृशामतिबालां च रोगीणीम । हत्वा पूर्वविधानेन चरेदर्धं व्रतं द्विजः ॥ ब्राह्मणान्भोजयेच्छक्त्या दद्याद्धेमतिलांश्च गाः । हेमगोतिलदानेन नरः पापात्प्रमुच्यते । प्रायश्चित्तपरीक्षणमाह हारीतः-" स्वशिरसा यवसमादाय गोभ्यो दद्याद्यदि ताः प्रमुदिता गृह्णीयुरप्येनं प्रवर्त्तयेयुरिति " यवसं तृणम् । एनं कृतप्रायश्चित्तं प्रवर्त्तयेयुः कर्मणीति शेषः । यदि गावस्तद्दत्ततृणं न गृह्णीयुस्तदा पुनः प्रायश्चित्तमित्यर्थः ॥ " अथोत्सृष्टवृषवत्सतर्योर्वधप्रायश्चित्तम् । ब्रह्मवैवर्त्ते हेमाद्रौ च " यो विप्रो वृषभं हन्याच्छिवलिङ्गाङ्कितं तनौ । भाले तप्तशिवं कृत्वा निःसार्य्य ध्वनयेत्स्वयम् ॥ त्रिवारं क्ष्मां परिक्रम्य ब्रह्मचर्यव्रते स्थितः । पश्चात्तापं समागम्य गन्धमादनपर्वते ॥ तत्र स्नात्वा त्रिवारं च रामलिङ्गं निरीक्षयेत् । पश्चात्तापमुपागम्य सभां नत्वा तदाज्ञया ॥ चान्द्रायणं ततः कुर्याद्दद्याद्विप्राय गां शिवाम् । पञ्चगव्यं ततः पीत्वा शुद्धो भवति नान्यथा॥राजा हन्यात् पूर्वमुक्तं वृषभं शिवलाञ्छितम् । दद्यादात्मसमं हेम सहस्रं वा गवां चरेत् ॥ वैश्यस्य राजवत्प्रोक्तं तत्तत्स्त्रीणां तथैव च । शूद्रं हन्याददो हन्ता तत्र तं निखनेद्भुवि ॥ सहस्रेणाथवा दग्ध्यादन्यथा दोषमाप्नुयात् ॥ " अथ बलीवर्दहननप्रायश्चित्तम् । शिवधर्मोत्तरे-"अनड्वान् हन्यते विप्रै रज्जुदण्डशिलादिभिः । गृहे वा विपिने तोये भारोद्वहनकर्मणि॥ ज्ञानतोऽज्ञानतो वापि रोषाद्वा मत्सरादपि । न तेषां निष्कृतिश्चास्ति तप्तकृच्छ्रैस्त्रिभिर्विना ॥"अथ गोवत्सहननप्रायश्चितम् । हेमाद्रौ स्कांदे-" यो बालवत्सं कामेन निमित्तैर्वा स्वयं हनेत् । तत्र देहविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत्॥ विप्रस्त्रीणां तदर्द्धं स्याद्बालवत्सविहिंसने । क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं भवेत् ॥ तत्तत्स्त्रीणां तदर्द्धं स्यात्पादजं दण्डयेच्छतम् ॥ " अथ महिषवधप्रायश्चित्तम् । हेमाद्रौ लैङ्गे-"माहिषं कृषिकाले तु ताडनैरश्मपातनैः । गृहे वा गृहदाहे वा यो हन्यात्पूर्वजो रुषा॥मृत्वानुभूय नरकं म्लेच्छो भवति भूतले। तस्यैव निष्कृति-

रियं सृष्टा मुनिपरायणैः ॥ अज्ञानात्तप्तकृच्छ्रं स्यात्प्राजापत्यं निमित्ततः । परप्रेरणया वापि ज्ञात्वा वा द्विगुणं चरेत् ॥ " उत्सृष्टमहिषहनने द्विगुणं प्रायश्चित्तम् । वृषभवृषणाभिघाते प्राजापत्यमिति शातातपस्मृतौ ॥

अथ क्षत्रियादिवधप्राश्चित्तम् ।

तत्र मनुः—"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः । वैश्येऽष्टमांशो व्रतस्थे शूद्रे ज्ञेयस्तु षोडशः ॥ अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । वृषमेकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥ त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् । वसन्दूरतरे ग्रामाद्वृक्षमूलेनिकेतनः॥ एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः । प्रमाप्य वैश्यं व्रतस्थं दद्यादेकशतं गवाम् ॥ एतदेव व्रतं कृच्छ्रं षण्मासान् शूद्रहा चरेत् । वृषभैकादशा वापि दद्याद् विप्राय गाः सिताः ॥ " आपस्तम्बः—" निपात्य क्षत्रियं चैव त्रिभिः कृच्छ्रैर्विशुद्ध्यति । वैश्यहत्यान्तु सम्प्राप्य कथञ्चित्काममोहितः ॥ कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरः संयतेन्द्रियः । कुर्याच्छूद्रवधं प्राप्य तप्तकृच्छ्रं समाहितः ॥ " शातातपोऽपि—"राजन्यवैश्यशूद्राणां षट्त्रीण्येकं चरेद्वधे । वर्षाणि ब्रह्मचर्यं च विशुद्ध्यर्थं क्रमेण तु ॥" निषिद्धसंसर्गोत्पन्नप्रतिलोमवधे प्रायश्चित्तमाह याज्ञवल्क्यः—" चान्द्रायणं चरेत्सर्वानवकृष्टान्निहत्य तु ।" शङ्खोऽपि—"सर्वेषामवकृष्टानां वधे प्रत्येकं चान्द्रायणम्" इति ॥ अमतिपूर्वके वधे तु मिताक्षरायाम् आङ्गिराः—" सर्वान्त्यजानां गमने भोजने संप्रमापणे । पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम् ॥ " इति पराकं कुर्यात् ॥ कारुकचण्डालादिवधप्रायश्चित्तमाह पराशरः—"शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् । प्राजापत्यद्वयं कृत्वा वृषैकादश दक्षिणाः॥ चाण्डालं हतवान् कश्चित् ब्राह्मणो यदि कंचन । प्राजापत्यं चरेत्कृच्छ्रं गोद्वयं दक्षिणां ददेत् ॥ क्षत्रियेणैव वैश्येन शूद्रेणैवेतरेण च । चाण्डालस्य वधे प्राप्ते कृच्छ्रार्द्धेन विशुद्ध्यति ॥ चौरः श्वपाकश्चाण्डालो विप्रेणाभिहतो यदि । अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥ " इति ॥

अथ स्त्रीवधप्रायश्चित्तम् ।

प्रायश्चित्तविवेके हारीतः—" षड्वर्षाणि राजन्ये त्रीणि वैश्य एकं शूद्रे क्षत्रियवद्ब्राह्मणीषु वैश्यवत् क्षत्रियासु शूद्रवदितरासु । तेन ब्राह्मणीवधे षाड्वार्षिकं महाव्रतम् । क्षत्रियावधे त्रिवार्षिकम् । वैश्यावधे शूद्रावधे च वार्षिकम्" इति । मनुस्मृतौ—" स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥" यमस्मृतौ—"हत्वा सवनगं वैश्यं राजन्यं वापि दीक्षितम्। हत्वा तु ब्रह्महत्यैव तथात्रेयीं च ब्राह्मणीम्॥" आङ्गिराः—" आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् । ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च ॥ " आत्रेयी चात्रिगोत्रजा । ऋतुस्नाता गर्भिणी चोच्यते ।

यत्र यद्वर्णात्रेयी तत्र तद्वर्णवधोक्तं प्रायश्चित्तं कार्यम्। तथा च याज्ञवल्क्यः—"यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम्। गर्भहा च यथावर्णं तथात्रेयीनिषूदकः॥" इति। एतेन ब्राह्मणीवधे षाड्वार्षिकं व्रतम्। तदशक्तौ धेनूनां नवतिर्देया। क्षत्रियावधे तु त्रैवार्षिकम्। अशक्तौ पञ्चचत्वारिंशद्धेनवो वैश्यावधे शूद्रावधे च वार्षिकम्। अशक्तौ पञ्चदश धेनवः। अत्यशक्तौ तु सर्वत्र तन्मूल्यं देयम्॥

## अथ व्यभिचारिणीस्त्रीवधप्रायश्चित्तम्।

मनुस्मृतौ—"जीनकार्मुकवस्तावीन् पृथग्दद्याद्विशुद्धये। चतुर्णामपि वर्णानां नारीं हत्वाऽनवस्थिताम्॥" याज्ञवल्क्योऽपि—"दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु। दृतिं धनुर्बस्तमविं क्रमादद्याद्विशुद्धये॥" इति। दृतिं जलाधारचर्मकोशम्। धनुः कार्मुकम्। बस्तं छागम्॥ अविं मेषं च दद्यादित्यर्थः। अधुना मनुष्यहत्यायां सर्वत्र राजनि निवेद्य प्रायश्चित्तं कार्यम्। तथाच वसिष्ठः—"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥" विष्णुधर्मोत्तरे—"प्रायश्चित्तैः शमं याति पापं कृतमसंशयम्। राजदण्डाच्छमं याति प्रायश्चित्तमकुर्वताम्॥"

## अथ गर्भवधप्रायश्चित्तम्।

प्रायश्चित्तविवेके—तत्र पुंस्त्वेन ज्ञाते पुरुषवधप्रायश्चित्तम्। स्त्रीत्वेन ज्ञाते स्त्रीवधप्रायश्चित्तम्। अविज्ञाते तु पुंवधप्रायश्चित्तं चाह मनुः—"हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्। राजन्यवैश्यौ चेज्ज्यानावात्रेयीमेव च स्त्रियम्॥" एतदेवेति ब्रह्महत्याव्रतमित्यर्थः। ब्राह्मणगर्भविषयमिदं तस्यैव प्रकृतत्वात्॥ क्षत्रादिगर्भवधे तु यद्वर्णो गर्भस्तद्वधप्रायश्चित्तम्। यथाह याज्ञवल्क्यः—"यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम्। गर्भहा च यथावर्णं तथात्रेयीनिषूदकः॥" व्रतपदोपादानात् ज्ञानत इदम्। अज्ञानतस्तदर्धम्। तेन ज्ञानकृते ब्राह्मणगर्भवधे द्वादशवार्षिकम्। क्षत्रियगर्भवधे त्रैवार्षिकम्। वैश्यगर्भवधे सार्द्धवार्षिकम्। शूद्रगर्भवधे नवमासिकम्। धेनुसंकलनमप्यूहनीयं सर्वत्र॥

## अथ गजाश्वादिपशुवधप्राश्चित्तम्।

यद्यपि गजाश्वादिवधः सङ्करीकरणपापमिदं तथापि हिंसायाः साजात्यादुपपातकप्रकरणे तत्प्रायश्चित्तं निरूप्यते। हिंसायां दानस्य मुख्यप्रायश्चित्तत्वात्। दाने विशेषमाह मनुः—"वासो दाद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजान्। अजमेषावनड्वाहं खरं हत्वैकहायनम्॥" अजमेषखरान्हत्वा एकहायनं वृषं दद्यादित्यर्थः। याज्ञवल्क्योपि—"गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः।

खराजमेषेषु वृषो देयः क्रौञ्चे द्विहायनः ॥" इति । पूर्वोक्तानां गजादीनां व्यापादने निर्धनत्वेन नीलवृषपञ्चकादिदानं कर्तुमशक्नुवन् प्रत्येकं कृच्छ्रं चरेत् । तथा च याज्ञवल्क्यः—" तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् । दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये ॥ " पराशरस्मृतौ—" गजस्य च तुरङ्गस्य महिषोष्ट्रनिपातने । शुद्ध्यते सप्तरात्रेण विप्राणां तर्पणेन च ॥ कुरङ्गं वानरं सिंहं चित्रं व्याघ्रं च घातयेत् । शुद्ध्यते स त्रिरात्रेण विप्राणां तर्पणेन च ॥" संवर्त्तस्मृतौ—" हस्तिनं तुरगं हत्वा महिषोष्ट्रं कपिं तथा । एतत्सर्वेषु कुर्वीत सप्तरात्रमभोजनम् ॥ " अशक्तौ तु विशेषमाह—काश्यपः । मृगमहिषवराहकुञ्जरगण्डकतरक्षुऋक्षवानरसिंहव्याघ्रपृषतचमररुरुकादीनामन्येषां च वधेऽहोरात्रोपितश्चीर्णान्ते घृतं दद्यात् । एतच्चाज्ञानतः सकृद्विषयमिति धर्मप्रदीपः । घृतपरिमाणं च घृतकुम्भं दद्यादित्यर्थः । संवर्त्तस्मृतौ तु—"सर्वासामेकजातीनां, मृगानां वनचारिणाम् । अहोरात्रोपितस्तिष्ठेज्जपन्वै जातवेदसम् ॥" जातवेदसं "जातवेदसे सुनवाम" इतिमन्त्रमिति निष्कर्षः । हिंसाप्रायश्चित्ते तु दानमेव मुख्यम् । तथा च मनुः—" क्रव्यादांस्तु मृगान्हत्वा धेनुं दद्यात्पयस्विनीम् । अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा च कृष्णलम् ॥" इति । एतच्चाज्ञानतः सकृद्विषयम् । क्रव्यादा व्याघ्रादयः । कृष्णलं गुञ्जापरिमितसुवर्णमिति भावः । कृष्णलदानं त्वत्यन्तापद्विषयम् । अथ पक्षिवधजलचरवधप्रायश्चित्तम् । तथाच पराशरः । क्रौञ्चसारसहंसांश्च चक्रवाकं च कुक्कुटम् । जलपादं च शरभमहोरात्रेण शुद्ध्यति ॥ वलाकाटिट्टिभौ वापि शुकपारावतावपि । अहिनक्रविघाती च शुध्यते नक्तभोजनात् ॥ वृककाककपोतानां शारितित्तिरिघातकः । अन्तर्जलमुभे सन्ध्ये प्राणायामेन शुद्ध्यति ॥ गृध्रश्येनशशादानामुलूकस्य च घातकः । अपक्वाशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ॥ भेरुण्डचापभासांश्च पारावतं कपिञ्जलम् । पक्षिणां चैव सर्वेषामहोरात्रमभोजनम् ॥ हत्वा मूषिकमार्जारसर्पाजगरडुण्डुभान् । कृशरां भोजयेद्विप्रान् लोहदण्डं च दक्षिणा ॥ शिशुमारं तथा गोधां हत्वा कूर्मं च शल्लकम् ॥ वृन्ताकफलभक्षी वाप्यहोरात्रेण शुद्ध्यति ॥" कृशरां खिचडीमित्यर्थः ।

## अथ व्रात्यताद्युपपातकप्रायश्चित्तम् ।

तत्र व्रात्यतायां मनुः—"येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥" यमस्मृतौ—" सावित्री पतिता यस्य दशवर्षाणि पञ्च च । सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥ एकविंशतिरात्रं च पिबेत्प्रसृतियावकम् । हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च ॥ ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥" याज्ञवल्क्येऽपि—"उपपातकशुद्धिः

स्यादेवं चान्द्रायणेन वा। पयसा वापि मासेन पराकेणाथवा पुनः॥" इति। एवमुक्तेन गोवधव्रतेन मासं पञ्चगव्याशनादिनेति भावः। वसिष्ठस्मृतौ-"पतितसावित्रीक उद्दालकव्रतं चरेत्" उद्दालकव्रतमपि तत्रैव-"द्वौ मासौ यावकेन वर्तयेन्मासं पयसा पक्षमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथं गच्छेद्व्रात्यस्तोमेन वा यजेत।" इति। अत्रेयं व्यवस्था। यस्योपनेत्राद्यभावेन तत्कालातिक्रमस्तस्य याज्ञवल्कीयव्रतानामन्यतमं शक्त्यपेक्षया भवति। अनापद्यतिक्रमे तु मानवं त्रिमासिकम्। तत्रैव षोडशवर्षोदूर्ध्वमपि कियत्कालातिक्रमे वसिष्ठोक्तमुद्दालकव्रतं व्रात्यस्तोमो वेति। तथा च याज्ञवल्क्यः-"आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्। ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥ अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः। सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥" इति। व्रात्यस्तोमः श्रौतयागविशेषः। येषान्तु पित्रादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तं संवत्सरं त्रैविद्यकं ब्रह्मचर्यव्रतम्। यस्य प्रपितामहादेरप्युपनयनं नानुस्मर्यते तस्य द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यव्रतं कारयित्वा तस्योपनयनं कार्यम्। व्रतकरणाशक्तौ मातृपितृरहितस्य निःस्वजनस्य मनुप्रोक्तप्राजापत्यत्रयस्थाने धेनुत्रयम्, तदशक्तौ तन्मूल्यम्। आलस्यानवधानादिना सावित्रीपाते याज्ञवल्क्योक्तं व्रात्यस्तोमयज्ञम्। अथवा वसिष्ठोक्तं दिनत्रयाधिकमासचतुष्टयसाध्यमुद्दालकव्रतम्। तदशक्तौ सपादनवधेनवो देयास्तद्दानाशक्तौ सर्वत्र प्रतिधेनु निष्कादिपरिमितरजतं दातव्यम्। अथवा प्रतिप्राजापत्यं दशसहस्रगायत्रीजपम्। अधुना ये ब्राह्मणा धनलोभेन क्षत्रियवैश्यानविवाहादूर्ध्वं सन्तानोत्तरं च उपनयनसंस्कारं कुर्वन्ति तेषां का गतिर्भविष्यति। प्रायश्चित्तप्रमाणाभावात्॥

## अथ स्तेयप्रायश्चित्तम्।

तत्र मणिमुक्तादिस्तेयप्रायश्चित्ते मनुः-"मणिमुक्ताप्रवालानां सर्वस्याश्ममयस्य च। अयःकांस्योपलानां च द्वादशाहं कणान्नता॥" इति। द्वादशाहं तण्डुलकणभक्षणं कुर्यादित्यर्थः। अपहृतद्रव्यप्रदानपूर्वकश्चैतत्कार्यम्। यथा विष्णुस्मृतौ-"दत्त्वैवापहृतं द्रव्यं धनिकस्याभ्युपायतः। प्रायश्चित्तं ततः कुर्यात्कलुषस्यापनुत्तये। रजताऽश्वादिस्तेये हारितः-रजतस्तैन्ये चान्द्रायणम्। जाबालः-"अश्वगोभूमिकन्याश्च हृत्वा चान्द्रायणं चरेत्। क्षुद्रपशूनपहृत्य प्राजापत्यं समाचरेत्। मनुस्मृतौ-"मनुष्याणां च हरणे स्त्रीणां क्षेत्रगृहस्य च। कूपवापीजलानां च शुद्धचै चान्द्रायणं स्मृतम्॥" अत्र मनुष्यस्त्रियौ दासदास्यौ न तूत्कृष्टौ तद्धरणेतु मनुना विशेष उक्तः। "पुरुषाणां कुलीनानां नारीणां च विशेषतः। मुख्यानां

चैव रत्नानां हरणे वधमर्हति ॥ निक्षेपस्यापहरणं नराश्वरजतस्य च । भूमिवज्र-मणीनां च रुक्मस्तेयसमं विदुः ॥" अथ धान्यादिस्तेये मनुः—"धान्यान्नधन-चौर्याणि कृत्वा कामाद्द्विजोत्तमः । स्वजातीयगृहादेव कृच्छ्राब्देन विशुद्धयति ॥" इति । अन्नं कृतान्नं धनं गवादि । अथ गुडादिस्तेये जाबालः—"गुडकार्पासधा-न्यानि सर्पिर्लवणमेव च । पक्वान्नमौषधं तैलं शय्या वास उपानहौ ॥ कांस्याय-स्ताम्रसीसं वा अर्द्धं कृच्छ्रार्द्धमेव च । उदके फलमूलेषु पुष्पपर्णसुगन्धिषु ॥ मृद्भा-ण्डमधुमांसेषु सन्तोष्य स्वामिनं ततः । पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन युज्य-ते ॥" इति । अर्द्धमिति कृच्छ्रार्द्धस्यार्द्धं पादमित्यर्थः । मनुस्मृतौ—"तृणकाष्ठ-द्रुमाणां च शुष्कान्नस्य गुडस्य च । चेलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥ कार्पासकीटजोर्णानां द्विशफैकशफस्य च । पक्षिगन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः ॥" पयो दुग्धम् । "भक्ष्यभोज्यापहरणे यानशय्यासनस्य च । फलमूलफलानां च पञ्चगव्यं विशोधनम् ॥" अथ जीविकाहरणे प्रायश्चित्तमाह शङ्खः—"यस्य यस्य तु वर्णस्य वृत्तिच्छेदं समाचरेत् । तस्य तस्य वधे प्रोक्तं प्रायश्चित्तं समा-चरेत् ॥" वायुपुराणेऽपि—"यदेतद्द्रविणं नाम प्राणास्ते तु वहिश्चराः । स तस्य हरते प्राणान् यो यस्य हरते धनम् ॥"

## अथाविक्रेयविक्रयप्रायश्चित्तम् ।

तत्र विष्णुस्मृतौ—" रक्तवस्त्ररङ्गरत्नगुडगन्धमधुररसोर्णाविक्रयी त्रिरात्रमुप-वसेत् " पैठीनसिः—" अथाविक्रेयाणि ब्राह्मणस्य लवणं पक्वान्नं मधु क्षीरं दधि घृतमुदकं सर्वगन्धोपललाक्षारक्तवासोगुडतैलं ग्राम्यपशूनामेकशफाः केशिनः सर्वे चारण्याः पशवो विद्या पूर्त्तमिष्टं गावः शङ्खश्चोर्णा चेति विक्रयणे तेषामेकैकस्मिन् प्राजापत्यं चरेत् " पराशरमाधवभाष्ये चतुर्विंशतिमते विशेषः—" सुराया विक्रयं कृत्वा चरेत्सौम्यचतुष्टयम् । लाक्षालवणमांसानां चरेच्चान्द्रायणत्रयम् ॥ मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयम् । पयःपायसापूपानां चरेच्चान्द्रायणव्र-तम् ॥ दध्याज्येक्षुरसानां च गुडखण्डादिविक्रये । सर्वेषां स्नेहपक्वानां पराकं तु समाचरेत् ॥ सिद्धान्नविक्रये विप्रः प्राजापत्यं समाचरेत् । उपवासं तु तक्रस्य नक्तं काञ्जिकविक्रये ॥ पूगीफलानि मञ्जिष्ठा द्राक्षा खर्जूरमेव च । एतेषां विक्रये कृच्छ्रं पनसस्य दिनत्रयम् ॥ कदलीं नारिकेलं च नागरं बीजपूरकम् । एतेषां पाद-कृच्छ्रः स्याज्जम्बीरादेस्तथैव च ॥ कस्तूरिकादिगन्धानां विक्रये कृच्छ्रमाचरेत् । कर्पूरादेस्तदर्द्धं स्याद्दिनं हिंग्वादिविक्रये ॥ तिलानां विक्रयं कृत्वा प्राजापत्यं समाचरेत् । यज्ञार्थं कृषिजातांश्च दानलब्धांश्च विक्रये ॥ रक्तपीतानि वस्त्राणि कृष्णाजिनमथापि वा । विक्रये त्र्यहमेतेषां गर्गस्य वचनं यथा ॥ गोविक्रयं नरः

कृत्वा लाभार्थं धनमोहितः। प्राजापत्यं प्रकुर्वीत गजानामैन्दवं स्मृतम्॥ खराश्वाजाविकानां च करभाणां च विक्रये । पराकं तत्र कुर्वीत नृणां द्विगुणमाचरेत्॥ नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणं व्रतम्। द्विगुणं पुरुषाणां च व्रतमाहुर्मनीषिणः॥ चान्द्रायणं प्रकुर्वीत एकाहं वेदविक्रये। अज्ञानान्तु पराकं स्यात् स्मृतीनां कृच्छ्रमाचरेत्॥ इतिहासपुराणानां चरेत्सान्तपनं द्विजः। रहस्यपंचरात्राणां कृच्छ्रं तत्र समाचरेत्॥ गाथानां नीतिशास्त्राणां प्राकृतानां तथैव च। सर्वासामेव विद्यानां पादकृच्छ्रं समाचरेत्॥" वसिष्ठस्मृतौ-"सद्यः पतति मांसेन लाक्षया लवणे न च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।"

## अथ ऋणानामपाकरणप्रायश्चित्तम्।

गृहीतस्य सुवर्णादेरप्रदानमृणानामपाकरणम्। तथा देवर्षिपितॄणां संबन्ध्यृणस्यानपाकरणं च। तथा च विष्णुधर्मोत्तरे-" देवानां च पितॄणां च ऋषीणां च तथा नरः। ऋणवाञ्जायते यस्मात्तन्मोक्षे प्रयतेत्सदा॥" तत्परिशोधनमपि तत्रैव "देवानामनृणो जन्तुर्यज्ञैर्भवति मानवः। अल्पवित्तश्च पूजाभिरुपवासव्रतैस्तथा॥ श्राद्धेन प्रजया चैव पितॄणामनृणो भवेत्। ऋषीणां ब्रह्मचर्येण श्रुतेन तपसा तथा॥" इति। ऋणापाकरणे याज्ञवल्क्यः-"उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा। पयसा वापि मासेन पराकेणाथवा पुनः॥" इत्यनेनोपपातकसामान्यविहितं व्रतचतुष्टयम् ऋणं दत्त्वा शक्त्यपेक्षया कार्यम्। तथाधिकृतस्यानाहिताग्नित्वेऽप्येतदेव व्रतचतुष्टयं वत्सरादूर्ध्वमापदि शक्त्यपेक्षया योज्यम्। अनापदि तु मानवं त्रिमासिकम् अर्वाक् पुनर्वत्सरात् मिताक्षरायां कार्ष्णाजिनिर्विशेषमाह-" काले त्वाधाय कर्माणि कुर्याद्विप्रो विधानतः। तदकुर्वन् त्रिरात्रेण मासि मासि विशुद्ध्यति॥ कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम्। चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा॥"

## अथ परिवेदनपरिवित्त्योः प्रायश्चित्तम्।

सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसो भ्रातुर्दाराग्निसंयोगः परिवेदनम्। कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यं पारिवित्त्यम्। तत्प्रायश्चित्तमाह पराशरः-" परिवित्तिः परिवेत्ता यया च परिविद्यते। सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥ द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च। कृच्छ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत्॥" तदपवादमपि तत्रैव " कुब्जवामनषण्ढेषु गदार्त्तेषु जडेषु च। जात्यन्धे बधिरे मूके न दोषः परिवेदने॥ पितृव्यपुत्रसापत्न्याः परनारीसुतस्तथा। दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥ ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव कारयेत्॥ अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा॥" इति।

## अथ भृतकाध्यापकभृतकाध्यापितयोश्च प्रायश्चित्तम् ।

पराशरमाधवे हारीतः—"भृतकाध्यापनं कृत्वा भृतकाध्यापितश्च यः। अनुयोगप्रदानेन त्रीन्पक्षांस्तु पयः पिबेत् ॥" हेमाद्रौ प्रायश्चित्तखण्डे जाबालिः—"अब्दं यो भृतकं धृत्वा वेदपाठी द्विजो यदि । तस्य चान्द्रत्रयं प्रोक्तं भृतकं यो वदेद्द्विजः ॥ अब्दद्वयं वदेद्यस्तु तस्य पापस्य शोधनम्। पश्चात्तापसमायुक्तः कुर्याच्चान्द्रचतुष्टयम् ॥ अब्दत्रये तु शुद्धः स्यात्षड्भिश्चान्द्रैर्यथाक्रमम्। तत ऊर्ध्वं ब्रह्महन्ता ललाटे द्विजवर्जितः ॥ ब्रह्महत्याव्रतं कुर्यात्कपालध्वजवर्जितम् ॥"

## अथ परस्त्रीगमनप्रायश्चित्तम् ।

पराशरस्मृतौ—"अगम्यागमने चैव शुद्ध्यै चान्द्रायणं चरेत् ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥ गोद्वयं वस्त्रयुग्मं च दद्याद्विप्रेषु दक्षिणाम् ॥" चाण्डालीगमनप्रायश्चित्तम्। तत्रैव "चाण्डालीं वा श्वपाकीं वा अनुगच्छति यो द्विजः । त्रिरात्रमुपवासित्वा विप्राणामनुशासनात् ॥ सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् । गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥ क्षत्रियो वा वैश्यो वा चाण्डालीं गच्छतो यदि । प्राजापत्यद्वयं कुर्याद्दद्याद्गोमिथुनद्वयम् ॥ श्वपाकीं वाथ चाण्डालीं शूद्रो वा यदि गच्छति । प्राजापत्यं चरेत्कृच्छ्रं चतुर्गोमिथुनं ददेत् ॥" पराशरमाधवीये अङ्गिराः—"पतितान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । मासोपवासं कुर्वीत चान्द्रायणमथोऽपि वा ॥" भ्रातृभार्यादिगमने विशेषोऽपि तत्रैव चतुर्विंशतिस्मृतिमते च "भ्रातुश्चैव कनिष्ठस्य भार्यां गत्वा तु कामतः। सान्तपनं प्रकुर्वीत कृच्छ्रद्वयमथापि वा। मातुलस्य स्त्रियं गत्वा पितृव्यतनयां तथा। तप्तकृच्छ्रं प्रकुर्वीत षड्रात्रं तत्सुतासु च॥ गुरोर्दुहितरं गत्वा पराकन्तु समाचरेत् । भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणं व्रतम् ॥ मातुलस्य सुतां गत्वा पितुश्च स्वस्रियां तथा । प्राजापत्यं प्रकुर्वीत हारीतवचनं यथा ॥ मातुश्च स्वस्रियस्यैव भार्यां गत्वा तु कामतः । पितृव्यतनयस्यैव सपादं कृच्छ्रमाचरेत् । दौहित्रीं पुत्रतनयां चरेच्चान्द्रायणं व्रतम् । तत्सुतां च स्नुषां गत्वा पराकन्तु समाचरेत् ॥ चरेच्चान्द्रायणं विप्रो गत्वोपाध्याययोषितम् । आचार्यस्य पराकन्तु बौधायनवचो यथा ॥ सम्बन्धिनः स्त्रियं गत्वा सपादं कृच्छ्रमाचरेत् । विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ॥ व्रतस्थागमने कृच्छ्रं सपादन्तु समाचरेत् । सखिभार्यां समारुह्य ज्ञातिस्वजनयोषितम् ॥ स कृत्वा प्राकृतं कृच्छ्रं पादकृच्छ्रं ततः पुनः । कुमारीगमने विप्रश्चरेच्चान्द्रायणव्रतम् ॥ पतितान्तु द्विजो गत्वा तदेव व्रतमाचरेत् ॥" संवर्तस्मृतौ—"क्षत्रियामथ वैश्यां वा गच्छेद्यः काममोहितः । तस्य सान्तपनः कृच्छ्रो भवेत्पापापनोदनः ॥ शूद्रां तु ब्राह्मणो गत्वा मासं मासार्द्धमेव वा । गोमूत्रयावकाहारो मासार्द्धेन विशु-

द्धयति ॥ विप्रस्तु ब्राह्मणीं गत्वा प्राजापत्यं समाचरेत् । क्षत्रियां क्षत्रियो गत्वा तदेव व्रतमाचरेत् ॥ कथंचिद्ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च । गोमूत्रयावकाहारो मासेनैकेन शुद्धयति ॥ ब्राह्मणी शूद्रसंपर्के कदाचित्समुपागते । कृच्छ्रचान्द्रायणं तस्याः पावनं परमं स्मृतम् ॥ " एतदत्यन्तव्यभिचारिब्राह्मणीविषयम् । इतरविषये वधस्मरणात् । वेश्यागमने प्रायश्चित्तम् । यमस्मृतौ-"वेश्याभिगमने पापं व्यपोहन्ति द्विजातयः । पीत्वा सकृत्सुतप्तं च पञ्चरात्रं कुशोदकम् ॥ गुरुतल्पव्रतं केचित्केचिद्ब्रह्महणो व्रतम् । गोघ्नस्य केचिदिच्छन्ति केचिच्चैवावकीर्णिनः ॥ " स्वैरिणीगमने शङ्खलिखितौ "स्वैरिण्यां वृषल्यां चावकीर्णः सचेलस्नान उदकुम्भं दद्यात् । ब्राह्मणो वैश्यायां चतुर्थकालाहारी ब्राह्मणान् भोजयेत् । क्षत्रियायां त्रिरात्रोपोषितो यवाढकं दद्यात् । ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात् । रजस्वलागमने । याज्ञवल्क्यः-" त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत् ।' त्रिरात्राशक्तौ चतुर्विंशतिपणाः देया इति शूलपाणिः । एतत् कामतः सकृद्गमने । अभ्यासेतु विशेषः संवर्त आह " रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा । तस्य पापविशुद्धयर्थमतिकृच्छ्रो विशोधकः ॥ " मनुरपि-" अमानुषीषु गोवर्जमुदक्यायामयोनिषु । रेतःसिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ " अमानुषीषु वडवाद्यासु न गवि । गोष्ववकीर्णी संवत्सरं प्राजापत्यं चरेत् ॥" इति शङ्खलिखितादिभिर्गुरुप्रायश्चित्ताभिधानात् । उदक्यायां रजस्वलायाम् । अयोनिषु योनितश्चान्यत्र स्त्रियामित्यर्थः । पराशरः "पशुवेश्याभिगमने महिष्युष्ट्रीं कपीं तथा । खरीं च शूकरीं गत्वा प्राजापत्यव्रतं चरेत् ॥ " एतदसकृद्गमने ज्ञेयम् । "गोगामी च त्रिरात्रेण गामेकां ब्राह्मणो ददत् । महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुद्धयति ॥" एतत्सकृद्गमनविषयम् । अथ ऋतौ भार्यानभिगमनप्रायश्चित्तम् ॥ तथाच बृहस्पतिः-" ऋतौ भार्यां न गच्छेद्यः सोऽपि कृच्छ्रार्द्धमाचरेत् । " कृच्छ्रार्द्धाशक्तौ चतुर्विंशतिपणा देयाः । पर्वसु स्वस्त्रीगमने दिनमेकमभोजनम् । अभ्यासे कृच्छ्रम् । श्राद्धादिने मैथुनेऽपि एतदेव प्रायश्चित्तम् । दिवामैथुनेऽपि स्नात्वा प्राणायामं कुर्यात् ॥

## अथावकीर्णिप्रायश्चित्तम् ।

हेमाद्रौ प्रायश्चित्तखण्डे गालवः-" मौञ्जीव्रतदिनाद्राजन् ब्रह्मचर्यमकल्मषम् । चरन्व्रतीह दुःसंगाद्योनौ रेतः समुत्सृजन् ॥ अवकीर्णी स विज्ञेयः सर्वदा तं परित्यजेत् । तस्य देहविशुद्धयर्थं पराकं कृच्छ्रमीरितम् ॥ तथा गर्दभमालभ्य-शुद्धिमाप्नोति पौर्विकीम् । पुनःसंस्कारपूतात्मा पञ्चगव्यं पिबेत्ततः ॥ एतेन शुद्धिमाप्नोति ब्रह्मचारी न चान्यथा ॥ " पराशरमाधवे शङ्खः-"गुप्तायां वैश्यायामवकीर्णी संवत्सरं त्रिषवणमनुतिष्ठेत् । क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणि ।"

एतदीषद्व्यभिचारिणीविषयम् । अत्यन्तव्यभिचारिणीषु पुनः शङ्ख आह—"स्वैरिण्यां ब्राह्मण्यामवकीर्णः षड्रात्रमुपोषितो गां दद्यात् । क्षत्रियायामुपोषितस्त्रिरात्रं घृतपात्रं दद्यात् । वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयित्वा यवसभारं च गोभ्यो दद्यात् । वृषल्यामवकीर्णः सचैलस्नात उदकुम्भं ब्राह्मणाय दद्यात् । गोष्ववकीर्णः प्राजापत्यं चरेत् । रण्डायामवकीर्णः पलालभारं शीशमाषं दद्यात् " पलालः सस्यशून्यधान्यनालादिरित्यर्थः । यतिवनस्थयोस्त्वधिकं व्रतमाह शाण्डिल्यः—"वानप्रस्थो यतिश्चैव खण्डने सति कामतः । पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत् ।" यतेः पुनर्गार्हस्थ्यस्वीकारे संवर्त्तआह—" संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि । स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान्प्रत्यहं व्रतम्॥" वृद्धपराशरोऽपि—"यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः । अनाशकनिवृत्तश्च गार्हस्थ्यं च चिकीर्षति ॥ चरेत्षाण्मासिकं कृच्छ्रं नियतात्मा समाहितः । चरेत्त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च ॥ जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥ " अत्रेयं व्यवस्था—ब्राह्मणस्य षाण्मासिकः कृच्छ्रः क्षत्रियस्य चान्द्रायणद्वयम् । वैश्यस्य कृच्छ्रत्रयम् ॥ ब्रह्मचारिणो व्रतान्तरलोपेऽपि मनुराह—"अकृत्वा भैक्षचरणमसमिध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ "

अथ पुत्रपुत्रीविक्रयप्रायश्चित्तम् । तत्र शङ्खः—"देवगृहप्रतिश्रयोद्यानारामसभाप्रपातडागपुण्यसेतुसुतविक्रयं कृत्वा तप्तकृच्छ्रं चरेत् । " कन्याविक्रये वृद्धपराशरः—" विक्रीय कन्यकां गां च कृच्छ्रं सान्तपनं चरेत् ॥ " एतदापद्यकामतो द्रष्टव्यम् । यत्तु चतुर्विंशतिमतेऽभिहितम्—" नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् । द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः ॥ " तत्तत्रैव कामतो द्रष्टव्यम् । तदाह पैठीनसिः—" आरामतटाकोदपानपुष्करिणीसुकृतसुतविक्रये त्रिषवणस्नाय्यधःशायी ब्रह्मचारी चतुर्थकालाहारः संवत्सरेण पूतो भवति । " कन्यादूषणे प्रायश्चित्तमाह शङ्खः—"कन्यादूषी सोमविक्रयी च कृच्छ्राब्दं चरेयाताम् । " हारितोऽपि—"कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी सुरामद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्रह्मघ्नो मित्रघ्नो मिथ्याभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते पञ्चतपोभूजलासनाद्यनुतिष्ठेयुः ग्रीष्मवर्षाहेमन्तेषु । मासं गोमूत्रयावकमश्नीयुः । "

## शूद्रसेवादिकरणे प्रायश्चित्तम् ।

तत्र बौधायनः—"समुद्रयाने ब्राह्मणन्यासापहरणे सर्वापण्यैर्व्यवहरणे भूम्यनृते शूद्रसेवायां च शूद्रायामभिजायते तदपत्यं च भवति । तेषां च निर्देशः चतुर्थ-

कालमितभोजनाः स्युः । अपोऽभ्युपेयुः । सवनानुकल्पस्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहरन्ति पापम्" इति । एतद् बहुकालाभ्यासविषयम् ॥

अनाश्रमवासे प्रायश्चित्तम् । तत्र हारीतः—अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाश्रममुपेयात् । द्वितीयेऽतिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रमतऊर्ध्वं चान्द्रायणम् ।" अथ द्रुमादिहिंसायाः प्रायश्चित्तम् । तत्र मनुः—"फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम् । गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ कृष्टजानामोषधीनां जातानां च स्वयं वने । वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतम् ॥" एतच्च यज्ञार्थवृक्षच्छेदनादिव्यतिरिक्तविषयम् । यमस्मृतौ—"वृक्षलतागुल्मच्छेदने वृद्धकृच्छ्रम् । फलवतां प्राजापत्यम् ।" वृद्धकृच्छ्रव्रतं शङ्खलिखितोक्तमष्टदिवससाध्यम् । स्थानविशेषजातानामुपजीव्यानां च छेदने दण्डद्वैगुण्यमाह याज्ञवल्क्यः ।"चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये । जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥ गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् । पूर्वस्मृतादर्धदण्डाः स्थानेषूक्तेषु कर्त्तने ॥ प्ररोहशाखिनां शाखास्कन्धसर्वविदारणे । उपजीव्यद्रुमाणां च विंशतिर्द्विगुणा दमाः ॥" एतेषां छेदनमुपपातकमध्ये पठितम् । उपपातके च—"उपपातकिनस्त्वेते कुर्युश्चान्द्रायणं नराः" इत्यनेन विष्णुनैव चान्द्रायणं विहितम् । अश्वत्थच्छेदने विशेषः पाद्मे क्रियायोगसारे—"यत्पापं ब्रह्महत्यायां गुरुस्त्रीगमने च यत् । सुरापाने तथा स्तेये न्यासापहरणे तथा ॥ यत्पापं भ्रूणहत्यायां गोहत्यायां द्विजोत्तम । स्त्रीहत्यायां च यत्पापं परस्त्रीगमने तथा ॥ शरणागतहत्यायां हत्यायां सुहृदां तथा । विश्वासवाक्याकथने परहिंसाविधौ च यत् ॥ यत्पापं परनिन्दायां हरिवासरभोजने । अश्वत्थच्छेदनाद्घोरं तत्पापं प्राप्यते जनैः ॥ अश्वत्थशाखामेकां हि स्वल्पामपि निहन्ति यः । स कोटिब्रह्महत्यानां फलं प्राप्नोति मानवः ॥ अश्वत्थश्छेदितो येन छेदिताः सर्वदेवताः । अश्वत्थः पूजितो येन पूजिताः सर्वदेवताः ॥ तदज्ञानाद्द्विजश्रेष्ठ योऽश्वत्थं हन्ति मानवः । संसारे नास्ति तत्कर्म यत्कृत्वा स च शुद्ध्यति ॥ विलोक्याश्वत्थहन्तारं यः शक्तो न निवारयेत् । तन्नेत्रयुग्मं बडिशैर्यमेनोत्पाट्यते स्वयम् ॥" हेमाद्रौ कौर्मे—"उदुम्बरे च न्यग्रोधे पराकात्पूर्ववच्छुचिः । बिल्वाऽश्वत्थौ यदा भिन्द्यात्तदा चान्द्रायणं चरेत् ॥" यज्ञार्थं छेदने दोषाभावः । तदुक्तं पाद्मोत्तरखण्डे—"यज्ञार्थं छेदितोऽश्वत्थः सर्वारोग्यप्रदो भवेत् ।" अमावास्यायां वृक्षमात्रछेदने दोषो विष्णुपुराणे—"छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे । पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति ॥" वीरुत्संस्थेऽमावास्यायाम् । अत्र ब्रह्महत्याप्रायश्चित्ते यमोक्तगायत्रीजपः शतावृत्त्या करणीयः । कृष्याद्यर्थच्छेदने तु न दोषः । तथा च वसिष्ठः—"फलपुष्पोपगां पादपान् न हन्यात् । कर्षणार्थं चोपहन्यात् ।" गार्ह-

स्थाङ्गे च—"लाङ्गलाद्यर्थं यज्ञपात्राद्यर्थं च वृक्षादिच्छेदने दोषाभावः ।" एतच्चा-मावास्यातिरिक्तविषयम् ॥

## अथ वार्द्धुष्यजीवने प्रायश्चित्तम् ।

हेमाद्रौ प्रायश्चित्तखण्डे नृसिंहपुराणे—"मासं जीवेद्यदा वृद्ध्या तदा यावकमुच्यते । मासद्वये तु तप्तं स्याच्चान्द्रं मासत्रये स्मृतम् ॥ षण्मासे तु महाचान्द्रं वत्सरे द्विगुणं चरेत् । पतितः स्यात्परं विप्रः सर्वकर्मबहिष्कृतः ॥" वत्सरादूर्ध्वं वार्द्धुष्यजीवने पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति । आपत्काले कृषिवाणिज्य वार्द्धुष्यजीवने दोषाऽभावः। तथा च बृहस्पतिः। "कुसीदकृषिवाणिज्यं प्रकुर्वीताऽस्वयंकृतम् । आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः ॥ बहवो वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः । सर्वेषामपि चैवैषां कुसीदमधिकं विदुः ॥ लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव भोजयेत् । ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥ वणिक्कुसीदो दद्यात्तु वस्त्रं गां काञ्चनादिकम् । कृषीवलोऽन्नपानानि यानशय्यासनानि च ॥ पण्येभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम् । पादेनायस्य पारक्यं कुर्यात्संचयमात्मवान् ॥ अर्धेन चात्मभरणं नित्यनैमित्तिकान्वितम् । पादं च प्रार्थमायस्य मूलभूतं विवर्धयेत् ॥ वणिक्कुसीद्यदोषः स्याद्ब्राह्मणानां च पूजनात् । राज्ञे दत्त्वा तु षड्भागं देवतानां च विंशकम् ॥ त्रिंशद्भागं च विप्राणां कृषिं कृत्वा न दोषभाक् ॥"

## अथ हिंसायन्त्रविधानप्रायश्चित्तम् ।

हेमाद्रौ गौतमः—"पर्वते वा जले वापि गृहे वाऽरण्यदेशतः । द्विजः कुर्यात्संगदोषाद्धिंसायन्त्रविधारणम् ॥ स वै नरकमासाद्य मृगयुर्जायते भुवि । तस्य दोषविशुद्ध्यर्थं पराकद्वयमीरितम् ॥ संवत्सरात्परं राजन् चान्द्रद्वयमुदाहृतम् । अतः परं न शुद्धोऽभूद्यथा व्याधस्तथैव सः ॥" संवत्सरात्परं विप्रस्तु यन्त्रनिर्माणे पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति । एवमेव तिलधान्येक्षुपीडनयन्त्रद्वारा जीविकाकरणे प्रायश्चित्तं बोद्धव्यम् । अवशिष्टोपपातकानामेतेष्वेवान्तर्भावो ज्ञेयः । याज्ञवल्क्योक्तं च प्रायश्चित्तं तत्तद्दोषापनुत्तये विधेयम् ॥

## अथ जातिभ्रंशकरप्रायश्चित्तम् ।

तत्र मनुः—"जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ तत्रापि पुंसि मैथुने प्रायश्चित्तम्। देवलस्मृतौ—"यो विप्रः पुरुषं गच्छेत्पञ्चबाणातुरः खलः । स्वदारेषु मुखे वापि यभेत्पापपरायणः।तस्य वीर्यं क्षयं याति मृतो नरकमश्नुते ॥" हेमाद्रौ जाबालिः—"पश्चात्तापमवाप्याथ यदीच्छेच्छुद्धिमात्मनः । एकस्मिन्दिवसे तप्तं मासे चान्द्रं ततः परम् ॥ अब्दात्परं

मुनिश्रेष्ठ षडब्दं कृच्छ्रमाचरेत् ॥ तस्योपनयनं भूयः पटगर्भे विधानतः। पञ्चगव्यं पिबेत्पश्चात्पूतो भवति सर्वदा ॥"कटादौ शुक्रोत्सर्गे प्रायश्चित्तमाहतुर्मनुमार्कण्डेयौ-"पशुपक्षिजले मार्गे कटायां बीजमुत्सृजन्। अयोनौ च वियोनौ च पशुयोनौ च भारत ॥ समुत्सृजन्ते ये शुक्रं ते वै निरयगामिनः । परेद्युर्वा तदानीं वा सचैलं स्नानमाचरेत् ॥ जपेत्सहस्रं गायत्रीं ततः शुद्धिरवाप्यते ॥ अन्यथा शुद्धिरेतस्य हुत्वा पापापनुत्तये ॥ " क्षत्रियवैश्ययोर्विप्रप्रायश्चित्ताद्द्विगुणम् ॥

## अथ संकरीकरणादिप्रायश्चित्तम् ।

तत्र मनुः-"संकरापात्रकृत्यासु मासं शोधनमैन्दवम्। मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ " मिताक्षरायां यमः-" संकरीकरणं कृत्वा मासमश्नाति यावकम्।कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत्।अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति। शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा॥ मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ॥ " तत्रैव बृहस्पतिना विशेष उक्तः-" ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम्। निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत् ॥" एतेषां च जातिभ्रंशकरादिप्रायश्चित्तानां मन्वाद्युक्तानां जातिशक्त्याद्यपेक्षया विषयो विभजनीयः ॥

## अथाभक्ष्यभक्षणप्रायश्चित्तम् ।

तत्राभक्ष्यं पड्विधमुक्तं भविष्ये-" जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम्। संसर्गाश्रयदुष्टं च सहृल्लेखं स्वभावतः॥"इति। जातिदुष्टं लशुनगृञ्जनपलाण्डुच्छत्राकादि।क्रियादुष्टं पतितसंस्पृष्टम्।कालाश्रयविदूषितं ह्यस्तनं चिरसंस्थितं च।संसर्गदुष्टं सुरालशुनादियुक्तम्। सहृल्लेखं विचिकित्सितान्नम्। स्वभावदुष्टं पुरीषादि इत्यर्थः। तत्र सामान्याभक्ष्यभक्षणे प्रायश्चित्तमाह विष्णुः-" अभोज्यानामपेयानामभक्ष्याणां च भक्षणे। कृच्छ्रपादं विशुद्ध्यर्थं चरेयुः क्षिप्रशोधनम्॥" संवर्त्तस्मृतौ-" अभोज्यभोजनं कृत्वा ब्रह्मक्षत्रविशां गणः। गोमूत्रयावकाहारः सप्तरात्रेण शुद्ध्यति ॥" बृहस्पतिः-"अलेह्यानामपेयानामभक्ष्याणां च भक्षणे। रेतोमूत्रपुरीषाणां शुद्ध्यै चान्द्रायणं चरेत् ॥" एतत् गुरुतरविषयम्। पराशरः "अमेध्यरेतोगोमांसं चाण्डालान्नमथापि वा॥ यदि भुक्तं तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत्॥अमेध्यं विण्मूत्रादि। तथैव क्षत्रियो वैश्योऽप्यर्धं चान्द्रायणं चरेत् शूद्रोऽप्येवं सदा भुक्ते प्राजापत्यं समाचरेत्॥पञ्चगव्यं पिबच्छूद्रो ब्रह्मकूर्चं पिबेद्द्विजः। एकद्वित्रिचतुर्गा वा दद्याद्विप्रादनुक्रमात् ॥" वृद्धपराशरः-"अगम्यागमने चैव मद्यगोमांसभक्षणे।शुद्ध्यै चान्द्रायणं कुर्यान्नदीं गत्वा समुद्रगाम् ॥ चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्। अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम् ॥" संवर्त्तः-" श्वविडालखरोष्ट्राणां कपे-

गोमायुकाकयोः । प्राश्य मूत्रं पुरीषं वा चरेच्चान्द्रायणं व्रतम्॥" मनुरपि–"अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥" अथ शूद्राद्यन्नभोजने प्रायश्चित्तमाह पराशरः–"शूद्रान्नं सूतकान्नं च अभोज्यस्यान्नमेव च । शङ्कितं प्रतिषिद्धान्नं पूर्वोच्छिष्टं तथैव च ॥ यदि भुक्तं तु विप्रेण अज्ञानादापदोऽपि वा । ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चं तु पावनम् ॥" सुमन्तुरपि–" राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् । आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः ॥ कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च । गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति॥ पूयं चिकित्सकस्यान्नं पुंश्चल्याश्चान्नमिन्द्रियम् । विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ॥" एतेभ्योऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः। तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः । भुञ्जानोन्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेव च॥" अङ्गिराः–" अभोज्यानान्तु सर्वेषां भुक्त्वा चान्नमुपस्कृतम् । अन्त्यावसायिनां भुक्त्वा पादकृच्छ्रेण शुद्ध्यति ॥ " पराशरः–" बालैर्नकुलमार्जारैरन्नमुच्छिष्टितं यदा । तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः॥ प्रोक्षणमकृत्वा भुक्ते सति पञ्चगव्यपानमाह संवर्त्तः–" श्वकाकोच्छिष्टगोच्छिष्टभोजने तु त्र्यहं क्षिपेत् । विडालमूषकोच्छिष्टे पञ्चगव्यं पिबेद्द्विजः ॥ " शूद्राद्युच्छिष्टभोजने प्रायश्चित्तमाह शंखः "शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः । क्षत्रियस्य तु सप्ताहं ब्राह्मणानां तथा दिनम् ॥ " पराशरः–" एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ मोहाद्भुञ्जीत यस्तत्र पंक्तावुच्छिष्टभोजने । प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा ॥ यस्तु भुंक्ते द्विजः पंक्तावुच्छिष्टायां कदाचन । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति । उष्ट्रीक्षीरादिभोजनेऽपि पराशरः–" उष्ट्रीक्षीरमवीक्षीरमज्ञानाद्भुञ्जते द्विजः । त्रिरात्रमुपवासेन पञ्चगव्येन शुद्ध्यति ॥ " शातातपः–" लशुनं गृञ्जनं चैव पलाण्डुं कृष्णवृन्तकम् । छत्राकं विड्वराहं च ग्राम्यकुक्कुटमेव च ॥ उष्ट्रीं च मानुषीं वापि रासभीक्षीरभोजनात् । उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः ॥ " उष्ट्रीं मानुषीं च इत्यनेन लक्षणया तयोर्दुग्धमवगन्तव्यम् । चाण्डालपतितादिस्पृष्टान्नभक्षणे प्रायश्चित्तमाह- शंखः–" अमेध्यचाण्डालपतितपुक्कसरजस्वलाऽवधूतकुणीकुष्ठीस्पृष्टानि भुक्त्वा कृच्छ्रं चरेत् । " पैठीनसिः–" महापातकिसंस्पर्शे स्नानमेव विधीयते । संस्पृष्टस्तु यदा भुंक्ते तप्तकृच्छ्रं तदा चरेत् ॥" जाबालः–"केशकीटावपन्नं च स्त्रीभिः स्पृष्टं तथैव च। श्वोदक्याशूद्रसंस्पृष्टं पञ्चगव्येन शुद्ध्यति॥" अवपन्नं केशादिभिः सह पक्वम् । स्त्रीशब्दश्चात्र शूद्रस्त्रीपरकः । ब्रह्मपुराणे–"चाण्डालपतितामेध्यैः कुनखैः कुष्ठिना तथा । ब्रह्मघ्नसूतिकोदक्याकौलेयककुटुम्बिभिः ॥ दृष्टं वा केश-

कीटाक्तं मृद्रस्मकनकाम्बुभिः । शुद्धमद्यात्सहृल्लेखं प्रभूतं विष्टमेव च ॥" कौलेयकः श्वा । कुटुम्बी प्राणिविशेषः । सहृल्लेखं सन्दिग्धम् । विष्टं पर्युषितम् । प्रभूतमधिकम् अभ्युक्ष्य भक्षणीयमिति निष्कर्षः। हेमाद्रौ गौतमः-"अन्ने वा पक्वशाके वा केशमात्रव्यवस्थिते । कवले वापि राजेन्द्र कवलं तत्परित्यजेत् ॥ गण्डूषमेकं कृत्वा तु शेषान्नं प्रोक्षयेज्जलैः।मृद्भस्म वा पिबेत्तत्र पाश्चद्भुक्त्वा न दोषभाक् ॥" सूतकमृतकान्नभक्षणे प्रायश्चित्तम् । तथाच पराशरः-"अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा । गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके ॥ विशः पञ्चशतेनैव क्षत्रियस्य शतेन च । ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुद्ध्यति ॥ अथवा वामदेव्येन साम्नैवैतेन शुद्ध्यति ॥" एतदामान्नभक्षणविषयम् । पक्वान्नभक्षणे तु शङ्खवाक्यम्-" शूद्रस्य सूतके भुक्त्वा षण्मासान्व्रतमाचरेत् । वैश्यस्य च तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत् ॥ क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् । ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत् ॥ अत्र व्रतशब्देन प्रायश्चित्तसमाप्तिपर्यन्तं यावकाहारो ज्ञेयः। ब्रह्मचारिणो विशेषमाहाङ्गिराः-"सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः । पिबेत्पानीयमज्ञानात्समश्नीयात्स्पृशेत वा ॥ पानीयपाने कुर्वीत पञ्चगव्यस्य भक्षणम् । त्रिरात्रं भोजने प्रोक्तं स्पृष्ट्वा स्नानं विधीयते ॥" अथैकादशाहादिश्राद्धान्नभोजनप्रायश्चित्तमाह शङ्खः-"चान्द्रायणं नवश्राद्धे पराको मासिके मतः । पक्षत्रयेऽतिकृच्छ्रं स्यात्षाण्मासे कृच्छ्रमेव च ॥ आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके ॥" नवश्राद्धं चतुर्थाहादिश्राद्धम् । ब्रह्मचारिणो मधुमांसादिभक्षणे प्रायश्चित्तम् । देवलः-"मृतान्नं मधुमांसं च यद्यश्नाति व्रती क्वचित् । त्रिरात्रोपोषितः सम्यक् रात्रिमेकां जले वसेत् ॥" यमेन तु तप्तकृच्छ्र उक्तः "मधुमांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव च । प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥ लघुहारीतः-"आमिषस्य तु यो भाण्डे पक्वमश्नाति सव्रतः । कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत् ॥" एतत् प्रमादात्सकृद्भक्षणे । ज्ञाने तु तद्द्विगुण्यादिकम । क्षीरपानाशक्तौ पुराणमेकं देयम् । अथाकृतापोशानाकृतमौनभोजनप्रायश्चित्तमाह संवर्तः ॥"आपोशानमकृत्वा तु यो भुङ्क्तेऽनापदि द्विजः । भुञ्जानश्च यदा ब्रूयात् गायत्र्यष्टशतं जपेत् ।" अष्टशतम् अष्टोत्तरशतम् । यज्ञोपवीतं विना भोजने हारीतः-"विना यज्ञोपवीतेन भुङ्क्ते च ब्राह्मणो यदि।स्नानं कृत्वा जपं कृत्वा उपवासेन शुद्ध्यति॥ मृल्लोष्टभक्षणे भविष्ये-"अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षं लवणं तथा । मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥" प्रत्यक्षलवणं चात्र सैंधवातिरिक्तविषयम्। तथाच वायुपुराणे । "सैन्धवं लवणं चैव तथा सामुद्रकं भवेत्।पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः ॥" ब्रह्मपुराणे "भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत् ।" प्रचेताः "मृल्लोष्टखादनेऽहोरात्रमभोजनाच्छुद्धिः। एतत् सकृद्भक्षणे।

नहद्दिनाभ्यासे तु तप्तकृच्छ्रमाह उशनाः—"मृल्लोष्टप्राशने तप्तकृच्छ्रम् तप्तकृच्छ्रकरणाशक्तौ सपादधेनुदानम् ।" अस्थ्यादिदूषितान्नभोजनप्रायश्चित्तं ब्रह्मपुराणे—"अस्थ्यादिदूषितान्नं तु भुञ्जानश्च यदा भवेत् । स्नात्वार्कमर्चयित्वा तु घृतं प्राश्य विशुद्ध्यति"॥ हारीतः "मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्दकान् । पीत्वा नवोदकं चैव पञ्चगव्येन शुद्ध्यति ॥" शंखलिखितौ—"केशमक्षिकारुधिरप्राशने आममांसकृमिभक्षणे रुधिरच्छर्दने रजस्वलावधूताभिगमने त्रिरात्रोपवासं घृतप्राशनं च कुर्यात्" अथ जातकर्मादिसंस्कारभोजनप्रायश्चित्तम् । तथा च व्यासः । "निवृत्ते चूडहोमे च प्राङ्नामकरणात्तथा । चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैवहि ॥" आपस्तम्बः—"याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम् । स्त्रीणां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत् ॥ ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥" अथ भोजनकाले गुदस्रावे प्रायश्चित्तम् । तथा चापस्तम्बः—"भुञ्जानस्य तु विप्रस्य कदाचित् स्रवते गुदम् । आदौ कृत्वा तु शौचं वै ततः पश्चादुपस्पृशेत्॥अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥" वृद्धशातातपः—"निगिरन्यदि मेहेत भुंक्ते वा मेहने कृते । अहोरात्रोषितोभूत्वा जुहुयात्सर्पिषाहुतीः॥मूत्रोच्चारसमुत्सर्गे मोहाद्भुंक्तेऽथवा पिबेत् । त्रिरात्रं तत्र कुर्वीत इति शातातपोऽब्रवीत्॥" अथ भोजकाले दीपनिवारणप्रायश्चित्तमाह देवलः—" वात्यया दीपनिर्वाणे भोजने नाशमाप्नुयात् । धृत्वा पात्रं तदा दोर्भ्यां संस्मरन्भानुमव्ययम् ॥ पुनर्दीपागमे तात गायत्र्यान्ने जलं क्षिपेत् । तदन्नमत्यजन्भुक्त्वाशुद्धिमाप्नोति दीपतः। अन्यदन्नं पुनर्भुक्त्वा पञ्चगव्यं पिबेत्तदा॥" भोजनकाले सूतकाद्याशौचप्रायश्चित्तमाह स एव । " यदा भोजनकाले तु अशुचिर्भवति द्विजः । भूमौ निक्षिप्य तद्ग्रासं स्नात्वा विप्रो विशुद्ध्यति ॥ भक्षयित्वा तु तं ग्रासमहोरात्रेण शुद्ध्यति । अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति॥" तैलाभ्यङ्गानन्तरं कृतभोजनस्य प्रायश्चित्तमाह संवर्तः—" समुत्पन्ने द्विजः स्नाने भुञ्जीतान्नं पिबेत्तथा । गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥ " स्नाने समुत्पन्ने तैलाभ्यङ्गक्षौरादिना अष्टोत्तरसहस्रं जपेदित्यर्थः । नीलीवस्त्रधारिणो भोजने प्रायश्चित्तम् । तथा च शङ्खः—" नीलीवस्त्रं परिधाय भुक्त्वा स्नानार्हकस्तथा । त्रिरात्रं तु व्रतं कुर्याच्छित्त्वा गुल्मलतास्तथा ॥ " अथोच्छिष्टभक्षणे प्रायश्चित्तम् । " समुच्छिष्टं तु यो भुंक्ते यो भुंक्ते त्यक्तभाजने । एवं वैवस्वतः प्राह भुक्त्वा चान्द्रायणं चरेत् ॥ " शंखलिखितौ—" ब्राह्मणोच्छिष्टभोजने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत् । " विवाहादिषु भोजने विशेषमाह यमः—"देवद्रोण्यां विवाहेषु यज्ञेषु प्रततेषु च । काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् ॥ तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ॥ " अकृतसंस्कारभो-

जने तु विष्णुः-" पक्षिश्वापदजग्धस्य रसस्यान्नस्य भूयसः । संस्काररहितस्यापि भोजने कृच्छ्रपादकम् ॥" अथापेयपानप्रायश्चित्तम् । तत्र मनुः " अपः सुराभाजनस्था मद्यभाण्डास्थितास्तथा । पञ्चरात्रं पिबेत्पीत्वा शंखपुष्पी शृतं पयः ॥" शंखपुष्पी औषधिविशेषः । यमस्मृतौ-" सुराभाण्डास्थिताश्चापो यदि कश्चिद्द्विजः पिबेत् । द्वादशाहं तु पयसा पिबेद्ब्रह्म सुवर्चलाम् । गायत्र्यष्टसहस्रं वा जपं कुर्वीत मानसम् ॥" अष्टसहस्रमष्टोत्तरसहस्रमिति भावः । कुक्कुरोच्छिष्टपाने स एव-" शुनोच्छिष्टाः स्थिताश्चापो यदि कश्चित्पिबेद्द्विजः । शंखपुष्पीविपक्केन त्र्यहं क्षीरेण वर्तयेत् ॥" लघुविष्णुः-" शुना संस्पृष्टभाण्डे तु रेतोमूत्रादिदूषिते । जलक्षीरादिकं पीत्वा तप्तकृच्छ्रं समाचरेत् ॥" चाण्डाल कूपादिजलपाने प्रायश्चित्तमाह । देवलः-"चाण्डालकूपभाण्डेषु यस्त्वज्ञानाज्जलं पिबेत् । स तु त्र्यहेण शुद्ध्येत शूद्रस्त्वेकेन शुद्ध्यति ॥" अङ्गिराः-" यस्तु चाण्डालसंस्पृष्टं पिबेत्किंचिदकामतः । स तु सान्तपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मनः ॥" अज्ञाने त्वापस्तम्बः-" चाण्डालेन तु संस्पृष्टा अपो यः पिबति द्विजः । त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ अन्त्यजैः खानिताः कूपास्तडागानि तथैव च । एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति ॥" शूद्रोदकपाने प्रायश्चित्तमाह शातातपः-" यदि विप्रः प्रमादेन शूद्रतोयं पिबेत्स्वयम् । उपोष्य बिल्वपद्मानां पलाशस्य कुशस्य च । एतेषामुदकं पीत्वा तेन शुद्धिर्भविष्यति॥"शूद्रतोयं शूद्रभाण्डस्थतोयम् । तथा च जाबालः-" नवभाण्डेषु पानीयं शूद्रविट्क्षत्रजन्मनाम् । पेयं तदपि विप्राणां पयो दधि तथैव च॥ घृतं तैलं पयः क्षीरं तथैवेक्षुरसो गुडः । शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥" यमः-" आममांसं घृतं क्षौद्रं स्नेहाश्च फलसंभवाः । म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः ॥ अथ पीतशेषजलपाने प्रायश्चित्तं भविष्यपुराणे-" ग्रासशेषं तु नाश्नीयात्पीतशेषं पिबेन्न तु । शाकमूलफलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ॥ " शंखस्मृतौ-"पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित् । त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥ " शातातपः-" उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥ " लघुहारीतः-"प्रपाजलं क्षीरघटस्य चैवं द्रोणीजलं कोषविनिर्गतं च । पीत्वावगाहेत जलं सवासा उपोषितः शुद्धिमवाप्नुते च ॥ " अथ विण्मूत्रसंस्पृष्टकूपजलपाने प्रायश्चित्तमाहाङ्गिराः-" कूपे विण्मूत्रसंस्पृष्टे पीत्वा तोयं द्विजोत्तमः । त्रिरात्रेण विशुद्ध्येत्तु कुम्भे सान्तपनं स्मृतम् ॥ " विष्णुः-"जलाशयेष्वथाल्पेषु स्थावरेषु महीतले । कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥ "अथ शवदूषितकूपजलपाने प्रायश्चित्तमाह हारीतः-"यस्तु कूपात्पिबेत्तोयं ब्राह्मणः शवदूषितात् ।

उपवासत्रयं कृत्वा पञ्चगव्येन शुद्ध्यति ॥" विष्णुः–"मृतपञ्चनखात्कूपात् अत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत् । द्व्यहं राजन्यः । एकाहं वैश्यः । शूद्रो नक्तम् । सर्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः । एतद्द्वयं ज्ञाने । अज्ञाने अर्द्धम् ।" देवलः–"क्लिन्नो भिन्नः शवश्चैव कूपस्थो यदि दृश्यते । पयः पिबेत्त्रिरात्रं तु मानुषे द्विगुणं स्मृतम् ॥" कामाभ्यासे आपस्तम्बः–"क्लिन्ने भिन्ने शवे चैव तत्रस्थे यदि तत्पिबेत् । पराकेण विशुद्धिः स्याद्ब्राह्मणानां च भोजनात् ॥"

## अथापेयक्षीरपानप्रायश्चित्तम् ।

तत्र मनुः–"अनिर्दशाया गोः क्षीरं औष्ट्रमैकशफं तथा । आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः ॥ आरण्यानां च सर्वेषां मृगाणां महिषीं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि । दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् ॥" इत्युक्त्वा शेषेषूपवसेदहरिति मनूक्त उपवासो द्रष्टव्यः । कामतस्तु याज्ञवल्क्योक्तं त्रिरात्रोपवासो द्रष्टव्यः इति । मिताक्षरायाम् हेमाद्रौ मार्कण्डेयगौतमौ–"मृतवत्सापयः पीत्वा मुखे पीत्वा जलं द्विजः । उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ॥" मुखेनोदकपानं हस्तेन विना इत्यर्थः । अथ ताम्रपात्रस्थित गव्यपाने प्रायश्चित्तम् । तथा च देवलः–"ताम्रपात्रस्थितं दुग्धं गोमूत्रं तक्रमेव वा । दधि वा ताम्रपात्रस्थं नारिकेलोदकं तथा ॥ द्विजः पीत्वा सुरापानं कृतवान्नात्र संशयः । अज्ञानाज्ज्ञानतो वापि सुरापानसमं विदुः ॥" हेमाद्रौ यमः–"ताम्रपात्रस्थितं गव्यं कांस्ये कूर्चफलोदकम् । लवणाक्तं पयश्चैव मद्यगन्धं तथैव च । पीत्वा द्विजश्चरेच्चान्द्रं प्राजापत्यमकामतः ॥" इति । "दैववशान्मद्यगन्धं वायुवशात्प्राप्तं घ्रात्वा पश्चात् विप्रस्य दक्षिणहस्तमाघ्राय शुध्यति । तदभावे मार्तण्डं पश्यन् स्वस्य दक्षिणकर्णं स्पृष्ट्वा हरिं मनसा स्मरन् शुद्ध्यति । ततः परं नासिकां पिधाय गच्छेत्" इति हेमाद्रौ । स्मृत्यन्तरे–"अनृतं मद्यगन्धं च दिवामैथुनमेव च । पुनाति वृषलस्यान्नं संध्या वहिरुपासिता ॥" अथ सूर्यसोमग्रहणभोजनप्रायश्चित्तमाह मनुः । "सूर्योपरागे यो भुंक्ते तस्य पापं महत्तरम् । तस्य पापविशुद्ध्यर्थं तप्तकृच्छ्रमुदीरितम् ॥ चन्द्रोपरागकाले तु भुक्त्वा कायं समाचरेत् । उभयोर्भोजने विप्रः पुनःसंस्कारमर्हति ॥" अथ भिन्नपात्रभोजने प्रायश्चित्तमाह । गालवः "स्वर्णं कांस्यं तथा राजन् राजतं भिन्नमेव यत् । तत्र भुक्त्वा चरेत्कायमन्यथा दोषमाप्नुयात् ॥" अथ संध्याभोजनादिकालेषु चाण्डालध्वनिश्रवणप्रायश्चित्तमाह देवलः । "स्नाने भोजनवेलायां जपहोमेषु पैतृके । संध्यादिनित्यकाम्येषु देवपूजासु सर्वदा ॥ चाण्डालास्त्रिविधाः प्रोक्तास्तेषां संभाषणादिकम् । कृत्वा कर्म परित्यज्य दृष्ट्वा तत्पुनराचरेत् ॥ अन्यथा दोषमाप्नोति कर्मभ्रष्टोऽभिजायते ॥ चाण्डालस्यैव

तत्कर्म तत्तु दृष्ट्वा परित्यजेत् ॥" ग्रामचाण्डालानां तत्तत्साधनध्वनिश्रवणं कृत्वा भोजनादिकं परित्यजेत्। तत्तत्साधनानि यथा हेमाद्रौ-"रजकस्य वस्त्रसंहननम्। चर्मकारस्य चर्मताडनम्। स्वर्णकारस्य सुवर्णादिताडनम्। तक्षकस्य दारुसौष्ठवार्थं तक्षणम्। तिलघातस्य तिलयन्त्रध्वनिः। कुलालस्य आर्द्रभाण्डताडनम्।" एतेषां तत्तत्साधनभूतानां ध्वनिश्रवणे च तद्दर्शने च त्याज्यं भोजनं पुनः करणीयं वा"। तदेव आह तत्रैव मार्कण्डेयः "एतेषां साधनानां च ध्वनिं श्रुत्वा स्वकर्मसु॥कर्म्म तत् संपरित्यज्य श्रोत्रं स्पृष्ट्वा च दक्षिणम् ॥ अक्षिणी पयसा स्पृष्ट्वा दृष्ट्वा सूर्यं विशुध्यति। दर्शनं संपरित्यज्य पुनः कर्म्म समाचरेत्।अन्यथा भोजयेद्विप्रः कर्म कुर्यात्तथा यदि। अष्टोत्तरशतं जप्त्वा गायत्रीं वेदमातरम्। एतेन शुद्धिमाप्नोति तद्विना नात्र कर्मणा॥"अथ रजस्वलाकृतान्नभोजनप्रायश्चित्तमाह देवलः-रजस्वलान्नं यो भुंक्ते द्विजोऽज्ञानात्सकृद्यपि। रौरवं नरकं याति स भवेत्सद्भिर्गर्हितः॥" मार्कण्डेयः-"अज्ञात्वा पुष्पिणी नारी कृत्वा वै पचनक्रियाम्। पश्चाच्छुष्कं रजो दृष्ट्वा तस्माद्देशादपक्रमेत् ॥ तां दृष्ट्वा भाषणं श्रुत्वा भोजनं द्विजनायकाः। कृत्वा शुद्धिमवाप्नुस्ते व्रतं चान्द्रं विधाय च ॥ पञ्चगव्येन शुद्धाः स्युरन्यथा पापिनोऽभवन्॥" अथ देवपूजावैश्वदेवादिपरित्यागप्रायश्चित्तमाह-हेमाद्रौ जाबालिः "वैश्वदेवं देवतार्चां नित्यहोमं तथाऽतिथिम्। ब्रह्मयज्ञं पितॄणां च तर्पणं पितृवल्लभम् ॥ त्यक्त्वा भुक्त्वा तथा विप्रः सुरापीत्युच्यते बुधैः। तप्तकृच्छ्रं चरेत्पापी तस्माद्दोषात्प्रमुच्यते ॥ पञ्चगव्येन पूतात्मा नान्यथा शुद्धिरस्ति हि॥" पराशरमाधवे मनुः-"वेदोदितानां नित्यानां कर्मणां समतिक्रमे। स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥" अथ खरोष्ट्रयानारोहणे याज्ञवल्क्यः-"प्राणायामं जले स्नात्वा खरयानोष्ट्रयानगः। नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम्॥" मनुस्मृतौ-"उष्ट्रयानं समारुह्य खरयानं तु कामतः। सवासा जलमाप्लुत्य प्राणायामेन शुध्यति ॥" अथाऽशुचिभोजने प्रायश्चित्तमाह। शातातपः-" मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः। मोहाद्भुक्त्वा त्रिरात्रं स्यादबुध्वा सांतपनं चरेत् ॥ मूत्रयित्वा व्रजन्मार्गे स्मृतिभ्रंशाज्जलं पिबेत्। अहोरात्रोषितः स्नात्वा जुहुयात्सर्पिषाहुतीः॥" बृहस्पतिः-"अस्नात्वा तु यदा भुंक्ते पिण्डं दत्त्वापि तद्व्रती। स्पृष्ट्वा शवमुदक्यां वा चण्डालं सूतिकां तथा ॥ अकामतस्त्रिरात्रं स्याद्बुद्ध्या सान्तपनं चरेत्॥" अथाप्सु मूत्रपुरीषादिकरणे मनुः-"विनाद्भिरप्सु वाऽप्यार्त्तः शारीरं सन्निवेश्य तु। सचेलो बहुधाप्लुत्य गामालभ्य विशुद्ध्यति॥" इति। इदमकामकारविषयम्। कामकारे तु यम आह-" आपद्गतो विना तोये शारीरं यो निषेवते। एकाहं क्षपणं कृत्वा

सचेलं स्नानमाचरेत् ॥"अथ पतितादिसन्निधावध्ययने । वसिष्ठः—"पतित-चाण्डालादिश्रवणे त्रिरात्रं वाग्यतोऽनश्नन्नासीनः सहस्रपरमां वाचमभ्यस्य ततः पूतो भवति"इति विज्ञायते। एतद्बुद्धिपूर्वकविषयकम् । अबुद्धिपूर्वके षट्त्रिंपन्मतेऽभिहितम् । "चाण्डालश्रोत्रावकाशे कृते श्रुतिस्मृतिपाठे एकरात्रमभोजनम् । " पतितादिसंभाषणे तु गौतमः—" न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत । संभाष्य पुण्यकृतो मनसा ध्यायेत् ब्राह्मणेन वा संभाषेत" ब्रह्मसूत्रं विना मूत्र-पुरीषकरणे प्रायश्चित्तम । पराशरमाधवे—"विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः । प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं जपेत् ॥ " इदं कामकारविषयम् । अकामतस्तु—" पिबतो मेहतश्चैव भुञ्जतोऽनुपवीतिनः । प्राणायामत्रयं षट्कं नक्तं च त्रितयं क्रमात् ॥ " भोजनानन्तरमाचमनमकृत्वैवासनादुत्थानेऽपि तत्रैव । "यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः । सद्यः स्नानं प्रकुर्वीत सोऽन्यथाऽप्रयतो भवेत ॥" अपांक्तेयपंक्तौ भोजने । मार्कण्डेयः—"अपांक्तेयस्य यः कश्चित् पंक्तौ भुंक्ते द्विजोत्तमः । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥" नीलीरक्तव-स्त्रधारणे त्वापस्तम्ब आह "नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् । अहो-रात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ रोमकूपैर्यदाऽगच्छेद्रसो नील्यास्तु कस्य चित । त्रिवर्णेषु च सामान्यं तप्तकृच्छ्रं विशोधनम् ॥ पालनं विक्रयश्चैव तद्वृत्त्या तूपजीवनम् । पातकं तु भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति ॥ स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् । वृथा तस्य महायज्ञो नीलीसूत्रस्य धारणात् ॥ नीली-मध्ये तु गच्छेद्वा प्रमादाद्ब्राह्मणः क्वचित् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति । नीलीरक्तेन वस्त्रेण यदन्न-मुपनीयते । दातारं नोपतिष्ठेत भोक्ता भुञ्जीत किल्बिषम् ॥ कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति ।"ब्राह्मणाद्यन्तरागमने । शङ्खः—"द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजोत्तमौ । अन्तरणे यदा गच्छेत्कृच्छ्रं सान्तपनं स्मृतम् ॥ होम-काले तथा दोहे स्वाध्याये दारसंग्रहे । अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत् ॥ " अथ सूर्योदयादिकालशयने प्रायश्चित्तमाह मनुः—" तञ्चेदभ्युदि-यात्सूर्य्यः शयानं कामकारतः । निम्लोचेद्वाऽप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ " ब्रह्मचारिणो विशेषमाह गौतमः " सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽ-स्तमितश्च रात्रिं जपेत् सावित्रीम् " यतिवनस्थयोर्विशेषमाह वसिष्ठः—" वन-स्थश्च यतिश्चैव सूर्य्येणाभ्युदितो यदि । ब्रह्मकूर्चाशिनौ भूत्वा जपेतां प्रणवं त्वहः ॥ " ब्रह्मचारिणः संध्याग्निकार्यलोपे । संवर्त्तः—"संध्यामापदि नोपास्ते अग्निकार्यं यथाविधि।सावित्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः। "अष्टसहस्रमष्टो-त्तरसहस्रमित्यर्थः । ब्रह्मचारिणो दण्डकमण्डल्वादिविनाशे प्रायश्चित्तमाह

पैठीनसिः "नष्टे दण्डकाष्ठे भैक्षं गत्वा तद्दत्त्वा ब्राह्मणाय तदहरुपवसेत् । अन्यत् प्रयच्छेत् गुरुः । कमण्डलावप्येवमेव । नष्टायां मेखलायां त्रिवृतमाचरेत् । "स्वश्रृक्रान्निरीक्षिणे यमः " प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् । दृष्ट्वा सूर्यं निरीक्षेत गामाग्निं ब्राह्मणं तथा ॥" श्राद्धे निमन्त्रितस्य कालातिक्रमे यम आह " केतनं कारयित्वा तु योऽतिपातयते द्विजः । ब्रह्महत्यामवाप्नोति शूद्रयोनौ प्रजायते ॥ एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतव्रतः । यतिचान्द्रायणं चीर्त्वा ततश्चान्द्रायणं चरेत् ॥" अथ क्षत्रियाद्याभिवादने हारीत आह "क्षत्रियाभिवादनेऽहोरात्रमुपवासः स्यात् । वैश्यस्यापि । शूद्रस्याभिवादने त्रिरात्रमुपवासः । तथा शय्याऽऽरूढपादुकोपानदारोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवतापूजाभिरताभिवादने त्रिरात्रमुपवासः स्यात् । अन्यत्रनिमन्त्रितेनान्यत्रभोजनेऽपि त्रिरात्रमुपवासः " एवमेव एकहस्ताभिवादने ज्ञेयम् । अथ मिथ्याभिशंसने प्रायश्चित्तमाह याज्ञवल्क्यः " महापापोपपापाभ्यां योऽभिशंसन्मृषा नरम् ॥ अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥ " जपश्च शुद्धवतीनां कार्यः । हारीतः-" अनृताभिशंसनाक्रोशे गुरूणां पैशुन्ये च एकविंशतिरात्रं तु पिबेद्ब्राह्मीं सुवर्चलाम् । " शंखलिखितौ " नास्तिकवृत्तिः कृतघ्नः कूटव्य- वहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसन इत्येते पञ्चसंवत्सरान् ब्राह्मणगृहे भैक्षं चरेयुः संवत्सरं धौतं भैक्षमश्नीयुः । षण्मासान् गा अनुगच्छेयुः । " एतेषां वचनानां यथायोगं व्यवस्था द्रष्टव्या । अभिशस्तप्रायश्चित्तमाह पैठीनसिः-"अनृतेनाऽभिशस्तः कृच्छ्रं चरेन्मासं पातकेषु महापातकेषु द्विमासम्" । अभिशस्तः परस्त्र्यां परपुरुषे वा मैथुनं प्रति मिथ्यादूषितः । मिथ्याकलङ्कितइत्यर्थः । हेमाद्रौ गालवः-" मिथ्यावादिकया बद्ध अभिशस्त इतीरितः । पापमस्ति सदा लोके वार्त्ता सर्वत्र गण्यते ॥ तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् । ततः शुद्धो भवत्येव मिथ्यात्वे विप्रपुङ्गवः ॥ " अथ शूद्रादिप्रतिग्रहयाजनप्रायश्चित्तमाह मनुः " यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव वा ॥ जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहिताः । मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् । प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च ॥ हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान्घृतम् । अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवत् ॥" अथ राजप्रतिग्रहप्रायश्चित्तमाह हारीतः-"राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत् । षष्ठे काले पयोभक्षीः पूर्णे मासे प्रमुच्यते ॥ तर्पयित्वा द्विजान्कामैः सततं नियतव्रतः । तपसा चेज्यया चैव राजपापात्प्रमुच्यते ॥ " मनुः-"यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः । स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥ " बृह-

स्पतिः—"पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च । मासोपवासं कुर्वीत चान्द्रायणमथापि वा॥" अयाचितस्यापवादः। मनुस्मृतौ—"शय्यां गृहकुशान् गन्धानपः पुष्पं मणीन् दधि । धान्यान्मत्स्यान्पयो मांसं शाकं चैव न निर्णुदेत्॥" अन्त्यजादिप्रतिग्रहे विशेषमाह यमः—"रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्त्तो मेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः । एतेषां च स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥" मनुस्मृतावपि—"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥" इति पतितत्वात् द्वादशवार्षिकं प्रतीयते अज्ञानात्सकृत्कृते तप्तकृच्छ्रं चान्द्रायणार्द्धं वा तत्र धेनुचतुष्टयमिति शूलपाणिः । अथ प्रायश्चित्तद्रव्य ग्रहणप्रायश्चित्तम् । हेमाद्रौ प्रायश्चित्तखण्डे—"प्राच्याङ्गभूर्यदा धेनुः सा धेनुः पाप दायिनी । प्रतिग्रहीतुः सा सद्यःसर्वश्रेयोविनाशिनी ॥ ब्राह्मणैरभ्यनुज्ञातश्चरेच्चान्द्राय- णत्रयम् । पश्चान्मनसि पूतात्मा पञ्चगव्यं पिबेत्ततः । एवं शुद्धिमवाप्नोति नान्यथा शुद्धिरीरिता॥" तत्रैव लिङ्गपुराणे—"द्विजो यः परितुष्टात्मा प्रायश्चित्ते नृपोत्तम । धेनुं द्वितीयां गृह्णीयादुदीच्याङ्गपयस्विनीम् ॥ चान्द्रायणद्वयं कुर्यात् पूर्ववद्राज- सत्तम । ततः शुद्धिमवाप्नोति परत्राऽमुत्र च ग्रहात् ॥" अथानुवादकपापप्राय- श्चित्तमाह गालवः—"सभामध्ये द्विजो यस्तु पापान्यनुवदेन्नृणाम् । स तुल्य- पापी तेनाशु महान्तं नरकं व्रजेत् ॥ पश्चान्महानदीं गत्वा स्नात्वा शुद्धजलैर्मृदा । गोमयैर्मृत्तिकाभिश्च अष्टोतरशतं चरेत् ॥ पश्चाद्देहविशुद्ध्यर्थं चान्द्रायणपरायणः । स्मरन्नारायणं देवमनन्तमपराजितम् ॥ व्रतान्ते पञ्चगव्येन शुद्धिं कृत्वा विचक्षणः । दद्याद्विप्राय गामेकां तत्पापपरिशोधिनीम् ॥ " अथ परिषद्विप्रप्रायश्चित्तमाह देवलः—" पर्षत्स्थितस्य विप्रस्य दोषबाहुल्यमस्ति चेत् । तत्पापस्य विशुद्ध्यर्थं प्राजापत्यत्रयं चरेत् ॥" जाबालिः—"परिषद्दक्षिणाभागं गृहीत्वा द्विजपुङ्गवः । पाददोषी भवत्याशुस्तस्मादेतत्परित्यजेत् ॥ प्राजापत्यत्रयं कृत्वा शुद्धिमाप्नोति निश्चितम् । पञ्चगव्यं पिबेत्पश्चान्नान्यथा शुद्धिरिष्यते ॥" अथ प्रायश्चित्तविधा- यकप्रायश्चित्तमाह देवलः—"विधायकश्च पापानां तदर्द्धं दोषभाग्भवेत् । तप्त- कृच्छ्रद्वयं कृत्वा शुद्धिमाप्नोति पूर्वजः ॥ पञ्चगव्यं ततः पश्चात्पीत्वा शुद्धिमवाप्नु- यात् ॥" अथ तुलादानादिदुष्टप्रतिग्रहप्रायश्चित्तं मनुस्मृतौ—"यद्गर्हितेना- र्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव वा ॥" हारीतः—"मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् ॥" सूर्यारुण- संवादेऽपि—" दुष्टप्रतिग्रहात्पापाद्देवभङ्गात्प्रमादतः ॥ गायत्र्यष्टसहस्रं तु जप्त्वा शुद्धिं लभेदिह ॥" निन्दितदेशगमनप्रायश्चित्तमाह देवलः—"सिन्धुसौराष्ट्रसौ- वीरांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥"

वायुपुराणे—"कारस्करे कलिङ्गे च औड्रान्ध्रशबरेषु च । पीत्वा चापो भूमिलये गत्वा चैव युगन्धरम् ॥" इत्यभिधायोक्तम् । तीर्थयात्राव्यतिरेकेण एतान् गत्वा तत्रैव चिरमुषित्वा गङ्गादिगमनं प्रायश्चित्तम् । तदशक्तौ पुनरुपनयनम् । अतिचिरवासे पुनरुपनयनं कृत्वा सर्वपापक्षयार्थं चान्द्रायणं कर्त्तव्यम् ॥

## अथ समुद्रयात्राप्रायश्चित्तम् ।

यदि कश्चिद्वाणिज्यार्थं राजाज्ञाप्रतिपालनार्थं च धूमगन्त्री(रेल)नौयानादियोगेन समुद्रयात्रां करोति तत्काले चाऽसौ स्वधर्ममनुतिष्ठति म्लेच्छयवनबौद्धादिविधर्मिपतितादिभिः सह गुरुतरसंसर्गं नाचरति तत्स्पृष्टमन्नं जलं च न सेवते अहरहरुपासनीयं सन्ध्यावन्दनादिकं परित्यजति तथापि तदानीं ब्राह्मणक्षत्रियवैश्यैः प्रायश्चित्तान्ते पुनरुपनयनं कार्यम् । तेषामव्यवहार्यता तदानीं नास्ति पतिताऽभावत्वात् ॥ तथा च मनुः—"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥" इति । "उषित्वा यत्र कुत्रापि स्वधर्मप्रतिपालनम् । षट् कर्माणि प्रकुर्वीरन्निति धर्मस्य निश्चयः ॥" तत्रैव प्रसंगेन नौकादिषु स्पर्शदोषाभावमाह पराशरः "रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च । स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकाचितानि च ॥" एवमेव अङ्गवङ्ग कलिङ्गसिन्धुप्रत्यन्तबौद्धम्लेच्छयवनचीनादिविधर्मिदेशेष्वपि ज्ञेयम् । यदि च धर्मार्थं समुद्रयात्रायां वा वाणिज्यनानाशिल्पकौशल्यम्लेच्छभाषादिविद्यार्थं राजाज्ञया राजकोपेन वा द्वीपान्तरगमनं करोति तत्र महानौकायां गमनकाले म्लेच्छ देशवासे च म्लेच्छादिसंस्पृष्टजलादिसेवनमन्नादिभक्षणं मद्यमांसवसास्नेहास्थिचूर्ण नीलीवस्त्रचर्मासनशय्यादिनानानिषिद्धतरगुरुसंसर्गं करोति सेवते च तदा कृतेऽपि प्रायश्चित्ते द्विजानां पातित्यमनिवार्यम्, अव्यवहार्यता च स्पष्टा ज्ञेया । तथा च हरिहरभाष्ये हेमाद्रौ आदित्यपुराणे च ।" द्विजस्याब्धौ तु नौ यातुः शोधितस्याप्यसंग्रहः ॥ देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः । दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । समुद्रयातुःस्वीकारःकमण्डलुविधारणम् । महाप्रस्थानगमनं गोपशुश्च सुराग्रहः । अग्निहोत्रहवन्याश्च लेहो लीढापरिग्रहः । असवर्णासु कन्यासु विवाहश्च द्विजातिषु । व्रतस्वाध्यायसापेक्षमघसंकोचनं तथा । अस्थिसंचयनादूर्ध्वं मङ्गस्पर्शनमेव च । प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् । संसर्गदोषः पापेषु मधुपर्के पशोर्वधः । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । शामित्रं चैव विप्राणां सोमविक्रयणं तथा । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ । कलौ युगे त्विमान्धर्मान् वर्ज्यानाहुर्मनीषिणः ॥" इति । अथ रहस्यप्रायश्चित्तान्यभिधीयन्ते । यत्पापं कर्तृव्यतिरिक्तेनाऽन्येन केनाचिदपि न ज्ञातं तद्रहस्यम् । तत्र प्रायश्चित्त-

मपि रहस्येव कार्यम् । तदुक्तं याज्ञवल्क्येन—"विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् । अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥" हारीतोऽपि—"अथ ब्राह्मणस्य श्रुतधर्मशास्त्रस्य रहस्यमनुक्रमिष्यामः । रहस्यकृते रहस्यमेव कर्त्तव्यम्, प्रकाशकृते प्रकाशमेव कर्त्तव्यम् ।" इति रहस्यत्वादेव नास्ति परिषदनुमत्यपेक्षा । न च विना परिषदं व्रतज्ञानाभाव इति शङ्कनीयम् । शास्त्रज्ञस्य तद्विज्ञानसंभवात् । इतरेणापि बुद्धिमता विद्वद्गोष्ठ्यां केनचित् व्याजेनावगन्तुं शक्यत्वात् । अतःस्वयमनभिज्ञोऽसौ केनचित् रहो ब्रह्महत्यादिकं कृतं तत्र किं रहस्यप्रायश्चित्तमित्यन्यव्याजेनावगम्य रहोव्रतमनुतिष्ठेत् । तत्र यागाद्यनुष्ठानशीलानां जपादिकं वाच्यम् । इतरेषां तु तपः । तथा च मिताक्षरायाम्—"कर्मनिष्ठास्तपोनिष्ठाः कदाचित् पापमागताः । जपहोमादिकं तेभ्यो विशेषेण प्रदीयते ॥ ये नामधारका विप्रा मूर्खा धनविवर्जिताः । कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः ॥ " क्षत्रियादीनां तु कृतैनसां धर्मोपदेशे विशेषोऽङ्गिरसा दर्शितः—"न्यायतो ब्राह्मणः क्षिप्रं क्षत्रियादेः कृतैनसः । अन्तरा ब्राह्मणं कृत्वा व्रतं सर्वं समादिशेत् ॥ तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥" एवमेव स्त्रीणामपि ज्ञेयम् । अथ रहस्यप्रायश्चित्तमाह—याज्ञवल्क्यः—"त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् । अन्तर्जले विशुद्ध्येत दत्त्वा गां च पयस्विनीम् ॥" बौधायनः—"अथातः पवित्रातिपवित्रस्याघमर्षणस्य कल्पं व्याख्यास्यामः ॥१॥ तीर्थं गत्वा स्नातः शुचिवासा उदकान्ते स्थण्डिलमुद्धृत्य सकृत्क्लिन्नेन वाससा सकृत्पूर्णेन पाणिनाऽऽदित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत ॥२॥ प्रातः शतं मध्याह्ने शतमपराह्ने शतमपरिमितं वा ॥३॥ उदितेषु नक्षत्रेषु प्रसृतयावकं प्राश्नीयात् ॥ ४ ॥ ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते ॥५॥ द्वादशरात्राद्भ्रूणहननं गुरुतल्पगमनं सुरापानमिति च वर्जयित्वैकविंशतिरात्रात्तान्यपि तरति तान्यपि जपति ॥६॥" मिताक्षरायां सुमन्तुः—"देवद्विजगुरुहन्ताऽप्सु निमग्नोऽघमर्षणं सूक्तं त्रिरावर्तयेत् । मातरं भगिनीं गत्वा मातृष्वसारं स्नुषां सखीं वान्यद्वागमनं कृत्वाऽघमर्षणमेवान्तर्जले त्रिरावर्त्य तदेतस्मात्पूतो भवति" इति । एतत्सकृदज्ञानकृतविषयम् । बृहद्विष्णुस्मृतौ—"ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेन्धनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्रमाज्याहुतीर्जुहुयात् । तत एतस्मात्पूतो भवति ।" इति । तन्निर्गुणवधविषयमनुग्राहकाविषयं वा । अथाघमर्षणमाहात्म्यमाह हेमाद्रौ प्रायश्चित्तखण्डे पराशरः—"कृत्यादौ तु तुलादाने प्रायश्चित्तेषु कर्मसु । चाण्डालादिषु संस्पर्शे स्वदारेषु दिवागमे ॥ दुरन्ने दुष्प्रतिग्रहे दुष्टसंसर्गसङ्गमे । अपेयपाने सर्वत्र ह्यघमर्षणमीरितम् ॥ स्तेये स्वल्पेऽप्यनुप्राप्ते तुलाचार्यादिसंग्रहे । दुर्जनैः सह संभाषे ह्यघमर्षणमीरितम् ॥ सन्ध्यादिनित्यकर्माणि

परित्यज्य यदा भवेत् । शाक्तेयादिषु मन्त्रेषु जपे चैवाघमर्षणम् ॥ अकार्यकर्मकर्त्ता च महापुरुषभोजने । सर्वपापविशुद्ध्यर्थमघमर्षणमीरितम् ॥ एकोद्दिष्टेषु श्राद्धेषु सपिण्डीकरणादिषु । यो भोक्ता स द्विजः कुर्यादघमर्षणमादरात् ॥ पिता पितामहश्चैव तथैव प्रपितामहः । यदाचरति पुत्रश्चेदन्यथाप्यघमर्षणः ॥ सूतकत्रितये भोक्ता भोक्ता वै चौलकर्मणि । यज्ञकर्मणि भोक्ता चेदघमर्षणमीरितम् ॥ यानि यानीह निन्द्यानि कर्म्माणि सुबहूनि च । तानि तान्याचरेद्विप्रस्तस्य स्यादघमर्षणम् ॥" मनुस्मृतौ-" त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणम् ॥ यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाऽघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ " प्राणायाममाहात्म्यमपि तत्रैव-" सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहणं मासात्पुनन्त्यहरहः कृताः ॥" अत्रिस्मृतौ- "प्राणायामांश्चरेत्त्रींस्तु यथाकालमतन्द्रितः। अहोरात्रकृतं पापं तत्क्षणादेव नश्यति॥" योगियाज्ञवल्क्यः-" द्विगुणं त्रिगुणं कृत्वा नियतात्मा जितेन्द्रियः । प्राणायामैश्चतुर्भिस्तु मुच्यतेऽप्युपपातकात् ॥ प्राणायामशतं कार्यं सर्वपापपनुत्तये । उपपातकयुक्तानामनादिष्टस्य चैव हि ॥ ब्रह्महा च सुरापश्चागम्यागामी तथैव च । सुवर्णस्तेयचौरस्तु गोघ्नो विश्वासघातकः ॥ शरणागतघाती च कूटसाक्षी ह्यकार्यकृत् । एवमादिषु चान्येषु पापेष्वभिरताश्चिरम् ॥ प्राणायामशतं कृत्वा सूर्यस्योदयनं प्रति । निर्मला स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ " विष्णुधर्मोत्तरे- " श्रावण्यां पौर्णमास्यां च सोपवासो जितेन्द्रियः । प्राणायामशतं कृत्वा मुच्यते सर्वकिल्बिषैः ॥ " बृहद्विष्णुस्मृतौ-" 'प्रत्यहं षोडश प्राणायामान् कृत्वा एककालं हविष्याशी मासेन ब्रह्महा पूतो भवति । कर्मणोऽन्ते पयस्विनीं दद्यात्॥" कूर्मपुराणे-"सुरां स्पृष्ट्वा द्विजः कुर्यात्प्राणयामत्रयं शुचिः ।अनस्थ्नां चैव हिंसायां प्राणायामेन शुद्ध्यति ॥" योगियाज्ञवल्क्यः-"अह्ना रात्र्या तु याञ्जन्तून् हिंसत्यज्ञानतो यदि । तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ॥ " बृहद्यमस्मृतौ-" चाण्डालीं पुल्कसीं मित्रकलत्रं स्नुषां वा गत्वा उपस्पृश्य वामदेव्येन त्रीन् प्राणायामान् कृत्वा तदैव तस्मात्पूतो भवति" इति । वामदेव्यं 'कयानश्चित्र' इत्यादि कण्डिकात्रयम् । एतत्प्रायश्चित्तं सकृदज्ञानकृतविषयम् । तत्रैव- "तथा रेतोमूत्रपूरीषप्राशनं कृत्वा लशुनपलाण्डुगृञ्जनकुम्भिक्यादीनामन्येषां चाभक्ष्याणां भक्षणं कृत्वा हंससूकरकुक्कुटगृगालमांसभक्षणं कृत्वा कक्षमात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वा पूतो भवति " इति । शुद्धवतीः एतोन्विन्द्रंस्तवामशुद्धम्'इत्यादिमन्त्रत्रयम् । वृद्धमनुः-"ब्राह्मणोऽथ सुवर्णस्तेयं कृत्वा हिरण्यं शालायां प्रक्षिप्य अप्सु निमज्य ग्रीवामात्रमुदकमवतीर्य चतसृभिर्हैरण्यवर्णाभिः प्राणायामं कृत्वा आत्मानं प्रक्षाल्य तस्मात्पापात्पूतो भवति" शालायां द्रव्यस्वामिनः शालाया-

मित्यर्थः। अथ सप्रणवव्याहृतिसशिरस्कागायत्रीजपफलम्। विष्णुधर्मोत्तरे–"सव्याहृतिः सप्रणवा जप्तव्या शिरसा सह। प्रणवेन तथा व्यस्ता वाच्या व्याहृतयः पृथक्॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥ दशकृत्वः प्रजप्ता सा रात्र्याह्ना यत्कृतं लघु। तत्पापं प्रणुदत्याशु नात्र कार्या विचारणा॥ शतं जप्ता तु सा देवी पापोपशमनी स्मृता। सहस्रजप्ता सा देवी उपपातकनाशिनी॥ लक्षजप्येन हि तथा महापातकनाशिनी। कोटिजप्येन राजेन्द्र यदिच्छति तदाप्नुयात्॥ यक्षविद्याधरत्वं वा गन्धर्वत्वमथापि वा। देवत्वमथवा राज्यं भूर्लोके हतकण्टकम्॥ दशसाहस्रजप्येन निष्कामः पुरुषोत्तमः। विधिना राजशार्दूल प्राप्नोति परमं पदम्॥ यथाकथंचिज्जप्तैषा देवी परमपावनी। सर्वकामप्रदा प्रोक्ता विधिना किं पुनर्नृप॥" शंखस्मृतौ–"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥ शतं जप्ता तु सा देवी दिनपापप्रणाशिनी। सहस्रजप्ता तु तथा पातकेभ्यः प्रमोचिनी॥ दशसाहस्रजप्येन सर्वकल्मषनाशिनी। लक्षं जप्ता तु सा देवी महापातकनाशिनी॥" वृद्धयमः–"गोहत्यां स्त्रीहत्यां राजन्यवैश्यहत्यां न्यासापहरणं कन्यादूषणं कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेन्धनेनाग्निं प्रज्वाल्य गव्येन घृतेन व्याहृतिभिराहुतिसहस्रं जुहुयात्। गायत्र्याष्टसहस्रमावर्त्य आदित्यं प्रेक्ष्यमाणस्तिसृभिर्हिरण्यवर्णाभिरात्मानं प्रोक्ष्य वामदेव्यं त्रिरावर्त्य तदेतस्मात्पूतो भवति।"

## अथ गायत्रीजपफलम्।

अत्रिवृद्धापस्तम्बौ–"सावित्र्यास्तु परं नास्ति शोधनं सर्वकर्मणाम्॥" योगियाज्ञवल्क्यः–"गोघ्नः पितृघ्नो मातृघ्नो भ्रूणहा गुरुतल्पगः। ब्राह्मणः स्वर्णहारी च यश्च विप्रः सुरां पिबेत्॥ गायत्र्याः शतसाहस्रात्पूतो भवति मानवः। वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाऽप्सु सूर्यदृक्॥ जप्त्वा सहस्रं गायत्र्याः शुद्धो ब्रह्मवधादृते॥" मनुस्मृतौ–"सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः। महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥" एतत्त्रिकं प्रणवव्याहृतिसावित्र्यात्मकमित्यर्थः। वृद्धापस्तम्बः–"सर्वेषामेव पापानां संकरे समुपस्थिते। दशसाहस्रमभ्यस्ता गायत्री पावनं परम्॥" चतुर्विंशतिमते–"गायत्र्यास्तु जपेत्कोटिं ब्रह्महत्यां व्यपोहति। लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः। गायत्र्या लक्षषष्ठ्या तु मुच्यते गुरुतल्पगः॥" षट्त्रिंशन्मते–"महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना। उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया॥ महापातकसंयुक्तो लक्षहोमेन शुध्यति॥" याज्ञवल्क्यः–"यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः। तत्र तत्र तिलैर्होमो गायत्र्या वाचनं द्विजः॥"

वाचनं दानमित्यर्थः । तथा च वसिष्ठः—" वैशाख्यां पौर्णमास्यां च ब्राह्मणान् पञ्च सप्त च । क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥" इति । वाचयेत्तिलान् दद्यादित्यर्थः । कृष्णाजिनदानमपि तत्रैव—"कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी।ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥"व्यासस्मृतौ "तिलधेनुं च यो दद्यात्संयतात्मा द्विजन्मने । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः॥" एतत्सकृद्विषयकम्। यज्ञावल्क्यः—"वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियापरम् । न स्पृशन्तीह पापानि महापातकजान्यपि ॥" मनुस्मृतौ "हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः। ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किञ्चन॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः । साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ "याज्ञवल्क्यः—"ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः । सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ॥ गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥" इति । इदमकामविषयकम् । शातातपः—"मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्माच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥" इति । जपश्चैकादशकृत्वः कार्यः । तथा च अत्रिस्मृतौ—"एकादश गुणान् वापि रुद्रानावर्त्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः॥" रुद्रान् लघुरुद्रमहारुद्रातिरुद्रान् पापानुसारेण कृत्वा शुद्धो भवतीत्यर्थः । कूर्मपुराणे—"जपस्तपस्तीर्थसेवादेवब्राह्मणपूजनम् । ग्रहणादिषु कालेषु महापातकशोधनम् ॥ पुण्यक्षेत्राभिगमनं सर्वपापप्रणाशनम् । देवताभ्यर्च्चनं नृणामशेषाघविनाशनम् ॥ अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम् । ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ॥ कृष्णाष्टम्यां महादेवं तथा कृष्णाचतुर्दशीम् । संपूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥ त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् । दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ॥ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् । द्वादश्यां शुक्लपक्षस्य सर्वपापैः प्रमुच्यते ॥ उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः । यमाय धर्मराजाय मृत्यवे चान्तकाय च॥वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥ वृकोदराय चित्राय चित्रगुप्ताय ते नमः । प्रत्येकं तिलसंयुक्तान्दद्यात्सप्तोदकाञ्जलीन् । स्नात्वा नद्यान्तु पूर्वाह्णे मुच्यते सर्वपातकैः॥" तत्रैव—"अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः । भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः॥ नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् । सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे॥"अथ सर्वविधपातकशुद्धिकारकविष्णुलक्षप्रणामविधानम्। प्रणामश्च कायिकवाचिकमानसभेदेन प्रत्येकं त्रिविधः। यथा कालिका पुराणे—"कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः । नमस्कारस्तु तत्त्वज्ञैरुत्त-

माधममध्यमः॥ पादौ प्रसार्य हस्तौ च पतित्वा दण्डवत् क्षितौ। जानुभ्यामवनीं गत्वा शिरसा स्पृश्य मेदिनीम्॥ क्रियते यो नमस्कार उत्तमः कायिकस्तु सः। जानुभ्यां भूतलं स्पृष्ट्वा शिरसा स्पृश्य मेदिनीम्॥ क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः। पुटीकृत्य करौ शीर्षे दीयते यद्यथातथा॥ अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते। यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः॥ क्रियते भक्तियुक्तैर्वा वाचिकस्तूत्तमः स्मृतः। पौराणिकैर्वैदिकैर्वा मन्त्रैर्या क्रियते नतिः॥ मध्यमोऽसौ नमस्कारो भवेद्वाचनिकः सदा। स वाचिकोऽधमो ज्ञेयो नमस्कारेषु पुत्रकौ॥ इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं पुनः। मानसं मानसं प्रोक्तमुत्तमाधममध्यमम्॥ त्रिविधे तु नमस्कारे कायिकश्चोत्तमः स्मृतः। कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति नित्यशः॥ अयमेव नमस्कारो दण्डादिप्रतिपत्तिभिः। प्रणाम इति विज्ञेयः स पूर्वं प्रतिपादितः॥" अष्टाङ्गप्रणामः। विष्णुधर्म्मे–"पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा। वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः॥ भूमौ निपत्य यः कुर्यात्कृष्णेऽष्टाङ्गनतिं सुधीः। सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात्॥" पञ्चाङ्गप्रणामः–"बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा। पञ्चाङ्गोऽयं प्रणामः स्यात्पूजासु प्रवराविमौ। जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं देवस्य सर्वान्कामानवाप्नुयात्॥" हरिभक्तिसुधोदये–"विष्णोर्दण्डप्रणामार्थं भक्तेन पतता भुवि। पतितं पातकं कृत्स्नं नोत्तिष्ठति पुनः सह॥" वाराहपुराणे–"वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम्। श्वित्री स जायते मूर्खः सप्तजन्मनि जन्मनि॥" अथ लक्षनमस्कारमाहात्म्यमाह भविष्योत्तरे अम्बरीषं प्रति वसिष्ठः–"ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छसि। तदा लक्षनमस्कारं व्रतं कुरु महीपते॥ संकीर्णकानां पापानां प्रायश्चित्तं यदीच्छसि। तदा लक्षनमस्कारं व्रतं कुरु महीपते॥ संकलीकरणानां च मलिनीकरणस्य च। अपात्रीकरणानां च प्रायश्चित्तं यदीच्छसि॥ तदा लक्षनमस्कारं व्रतं कुरु महीपते। भ्रातृपत्नीसुतानां च गामिनः कामिनस्तथा॥ स्वसृभ्रातृवधूनां च स्वेच्छया गमनस्य च। दासीवेश्यासंगजस्य संक्षयं यदि वाञ्छसि। तदा लक्षनमस्कारं व्रतं कुरु महीपते। परस्वहारकस्यापि देहस्य हरणस्य च। रहस्यभेदकस्यापि रहस्यकृतपापिनः। त्यागस्य पंचयज्ञानां दुःशास्त्राभिरतेस्तथा। गुरुनिन्दाश्रुतेश्चापि गुरुस्वहरणस्य च। लेह्यानां चैव चोष्याणां संक्षयं यदि वाञ्छसि। तदा लक्षनमस्कारं व्रतं कुरु महीपते। कृतस्य जन्म साहस्रैर्मेरुविन्ध्यसमस्य च। अत्युत्कटस्य पापस्य एतज्जन्मकृतस्य च। सर्वपापस्य जातस्य संक्षयं यदि वाञ्छसि। तदा लक्षनमस्कारं व्रतं कुरु महीपते। इदं व्रतं महापुण्यं पापारण्यदवानलः। पापपर्वतकुलिशं पापाब्धितरणोडुपम्। सर्वपापहरं नृणां सद्यो विष्णोः प्रसादनम्। नानेन सदृशं किंचि-

त्रिषु लोकेषु पठ्यते। सर्वेषामाश्रमाणां च विहितं श्रुतिचोदितम्। नारीणां सधवानां च विधवानां विशेषतः। सर्वेषामपि पापानां प्रायश्चित्तमिदं भवेत्॥" अस्योद्यापनविधानं मत्कृते व्रतोद्यापनप्रकाशे द्रष्टव्यम्। अथ समस्तपातकनिवृत्तिकारकविष्णोः शिवस्य वा लक्षप्रदक्षिणाविधानम्। भविष्योत्तरे—"ब्रह्मघ्नस्य सुरापस्य गुरुदारावमर्शिनः। अपात्रीकरणान्येवं सङ्कलीकरणानि च। प्रकीर्णकानि चरतो मलिनीकरणानि च। भ्रातृपत्नीसुतादीनां गामिनः काममोहितः। गुरौ विश्वासहीनस्य व्रतभ्रष्टस्य पापिनः। सन्ध्याकर्मविहीनस्य जगद्दुङ्मार्गवर्तिनः। दासीवेश्यासङ्गिनश्च चाण्डालीगामिनस्तथा। परस्वहारिणश्चापि देवद्रव्यापहारिणः। ब्राह्मणद्वेषिणश्चापि वृत्तिच्छेदकरस्य च। रहस्यभेदकस्यापि रहस्यकृतपापिनः। ब्रह्मयज्ञविहीनस्य दुःशास्त्रनिरतस्य च। गुरुनिन्दादिश्रोतुश्च गुरुद्रव्यापहारिणः। ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छति। लक्षप्रदाक्षिणानाम व्रतं कुर्यान्महीपते॥"अथ स्त्रीणां समस्तपातकप्रायश्चित्तरूप लक्षवर्तिविधानम्। वामनपुराणे—"अथ सर्वाणि पापानि रहस्यानि कृतानि वै। नश्यन्ति तानि सर्वाणि व्रतस्यास्य प्रभावतः। चाण्डालगामिनी वापि तथा शूद्राभिगामिनी। कारूकरजकादीनां गामिनी इष्टचारिणी। ब्रह्मक्षत्रियविट्शूद्रप्रातिलोमाभिगामिनी। मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी। बालघ्नी वा पतिघ्नी वा मातापित्रोर्वधे रता। गोघ्नी वा तस्करा वापि रजःसंकरकारिणी। एवमादिमहापापैरावृतापि कुलाङ्गना। कृत्वा चैतद्व्रतं सम्यङ्मुच्यते नात्र संशयः। एवं वर्तिप्रदानेन विष्णोरमिततेजसः। कोटयो ब्रह्महत्यानामगम्यागमकोटयः। तथैवात्युग्रपापानि कोटयोऽथ सहस्रशः। नश्यन्ति नात्र संदेहो नारीणां वा नरस्य च। सल्लक्षवर्त्तिभिर्विष्णोः कृते चारार्तिकार्पणे॥" भविष्येपि—"दीपानां लक्षकं यस्तु कुर्यात्परमधार्मिकः। यावत्कालं प्रज्वलन्ति दीपास्ते लिङ्गसन्निधौ। ब्रह्मणो युगसाहस्रं दाता स्वर्गे महीयते॥" एतद्दीपदानं कार्तिकमाघयोः कार्यम्। तद्विधानंतु मत्कृतोद्यापनप्रकाशे द्रष्टव्यम्॥

इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना कर्मकाण्डाचार्य—कर्मकाण्डकोविद—कर्मकाण्डभास्कर—श्रौतभूषण इत्युपाधिचतुष्टयविभूषितेन गौडपण्डितश्रीचतुर्थीलालशर्मणा विरचिते प्रायश्चित्तप्रकाशे विचारकाण्डः प्रथमः समाप्तः॥

श्रीः।

## अथ सर्वपातकोपयोगि—

## सर्वप्रायश्चित्तप्रयोगः।

कर्त्ता सर्वां प्रायश्चित्तसामग्रीं सम्पाद्य अपराह्णे चतुरो धर्मशास्त्रज्ञान् विप्रान् पर्षत्त्वेनोपवेश्य सचैलं वाग्यतः स्नात्वा शक्तश्चेत्क्लिन्नवासाः सदस्यान् प्रदक्षिणीकृत्य "समस्तसम्पत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः। अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः॥ १॥ आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः। समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः॥ २॥ विप्रौघदर्शनात् सद्यः क्षीयन्ते पापराशयः। दर्शनान्मङ्गलावाप्तिरर्चनात् सर्वसम्पदः॥३॥ आधिव्याधिहरं नृणां मृत्युदारिद्र्यनाशनम्। श्रीयशःकीर्तिदं वन्दे विप्रश्रीपादपंकजम्॥ ४॥" इति प्रार्थनापूर्वकं सभ्यान् गन्धाक्षतपुष्पैः सम्पूज्य ज्ञानाज्ञानकृतपापप्रायश्चित्ताङ्गत्वेनेदं गोवृषनिष्क्रयद्रव्यं सदस्येभ्यो दातुमहमुत्सृजे इति संकल्प्य निष्कादिपरिमितरजतद्रव्यं प्रत्येकं दत्त्वा साष्टाङ्गं भूमौ नमस्कुर्यात्। ततो द्विजास्तं पृच्छेयुः "किन्ते कार्यं वदास्माकं किं वा मृगयसे द्विज। तत्त्वतो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः॥ १॥ अस्माकं चैव सर्वेषां सत्यमेव परं बलम्। यदि चेद्रक्षसे सत्यं नियतं प्राप्स्यसे शुभम्॥ २॥ यद्यागतोऽस्यसत्येन न त्वं शुद्ध्यसि कर्हिचित्।" इति। अतो मिथ्या मावादीः सत्यमेव वदेति पृष्टः प्रायश्चित्ती ब्रूयात्—अमुकनाम्नो मम जन्मप्रभृति अद्यदिनंयावत् ज्ञाताज्ञातकामाकामसकृदसकृत्कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकमहापातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्येसम्भावितपातकानां निरसनार्थमनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्त इति वदेत्। उपदिशाम इति द्विजाः। (पुत्रादिः प्रतिनिधिश्चेन्मम पितुर्जन्मप्रभृतीत्यादि वदेत्। एकपापकृते तु किन्ते कार्यमिति प्रश्ने मयामुकवधः कृतोऽमुकभक्षणं वामुकागम्यागमनं कृतमित्यादि प्राकृतमेव पापमुच्चार्य तत्प्रायश्चित्तमुपदिशन्तु भवन्त इति वक्तव्यम्। जन्मप्रभृति अद्ययावदित्यादिकं न वदेत्) ततो ब्राह्मणान् प्रार्थयेत्। "आब्रह्मस्तम्बपर्यन्तं भवद्वंश इदं जगत्॥ यक्षरक्षःपिशाचादि सदेवासुरमानुषम्॥१॥ सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः। मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः॥२॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम्। प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ॥३॥ पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमैः॥" इति प्रार्थयित्वा मामनुगृह्णन्तु भवन्त इति नमेत्। अनुगृह्णीम इति द्विजा ब्रूयुः। ततः सभ्यैः शक्त्यादि विचार्य प्रायश्चित्ते निश्चिते कर्त्ता ॐ करिष्यमाणप्रायश्चित्ताङ्गत्वेन निबंधपूजामनुवादकपूजां च करिष्य इति संकल्प्य, गन्धाक्षतपुष्पादिभिः पुस्तकपूजा-

मनुवादकपूजां च कृत्वा निबंधपूजात्वेन किंचिद्द्रव्यं निधाय अनुवादकाय यथाशक्ति रजतादिद्रव्यं पापानुसारेण दद्यात्। ततः सभ्याः पुस्तकवाचनपूर्वकमनुवादकस्याग्रे कथयेयुः। अनुवादकश्च कर्त्तारं वदेत्। तद्यथा अमुकस्य ते जन्मप्रभृति अद्ययावत् ज्ञानाज्ञानकामाकामसकृदसकृत्कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णपातकानां मध्ये सम्भावितपापानां निरासार्थं पर्षदुपदिष्टं षडब्दप्रायश्चित्तममुकप्रत्याम्नायद्वारा अथवा अशीत्यधिकशतगोनिष्क्रयभूतयथाशक्तिरजतप्रत्याम्नायद्वारा प्राच्योदीच्यांगसहितं त्वया आचरितव्यं तेन तव शुद्धिर्भविष्यति त्वं कृतार्थो भविष्यसीति त्रिरुपदिशेत्। कर्त्ता च ॐ भवदनुग्रह इत्यङ्गीकृत्य प्रणम्य पर्षदं विसृजेत्। इत्यपराह्णकर्म। ततो ग्रामाद्बहिः सायाह्ने देशकालौ संकीर्त्य—अमुकशर्मणो मम जन्मप्रभृति अद्ययावत् ज्ञानाज्ञान-कामाकाम-सकृदसकृत्कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीत-सकलपातकातिपातकोपपातक-संकरीकरण-मलिनीकरणापात्रीकरण-जातिभ्रंशकरणप्रकीर्णपातकानां मध्ये सम्भावितपापानां निरासार्थं श्रीपरमेश्वरप्रीत्यर्थं पर्षदोपदिष्टं षडब्दप्रायश्चित्तं प्राच्योदीच्यांगसहितं अशीत्यधिकशतगोनिष्क्रयरजतद्रव्यप्रत्याम्नायेनाहमाचरिष्ये। तदङ्गत्वेन वपनं दन्तधावनं दशविधस्नानानि च करिष्ये इति संकल्प्य। शिरसि हस्तं निधाय "यानि कानि च पापानि ब्रह्महत्यासमानि च। केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम्॥" इति पठित्वा वपनं कारयेत्। (वपनं च शिखाकक्षोपस्थवर्जं नखकेशरोम्णामुदङ्मुखसंस्थं कार्यमिति सर्वत्र ज्ञेयम्। क्षौराभावे षडब्दादिव्रतं द्विगुणं पर्षदक्षिणापि द्विगुणा। यत्र तु सभर्तृकस्त्रिया जीवत्पितृकादेश्च क्षौरं निषिद्धं तत्र न द्विगुणं व्रतम्।) ततः क्षौरान्ते गण्डूषान् कृत्वा द्वादशाङ्गुलादि यथोक्तदन्तधावनकाष्ठेन ॐआयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वन्नो देहि वनस्पते॥ १॥ ॐ अन्नाद्याय व्यूहध्वꣳसोमो राजायमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च॥ २॥ मुखदुर्गन्धनाशाय दन्तानाञ्च विशुद्धये। ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम्॥ ३॥ इति मन्त्रैर्दन्तशुद्धिं कृत्वा जिह्वामुल्लिख्य स्नात्वा भस्मादिना दश स्नानानि कुर्यात्। तत्र वामहस्ते दक्षिणहस्तेन यज्ञियभस्म गृहीत्वा। जलमिश्रणानन्तरं दक्षिणहस्तेन सम्मर्द्याभिमन्त्रयेत्। तत्र मन्त्राः। ॐ अग्निरिति भस्म। ॐ वायुरिति भस्म। ॐ जलमिति भस्म। ॐ स्थलमिति भस्म। ॐ व्योमेति भस्म। ॐ सर्वꣳ ह वा इदं भस्म। ॐ मन एतानि भस्मानीत्यभिमन्त्र्य। ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्। ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॐ ईशा-

नाय नमः इति शिरसि मर्दयेत् । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॐ तत्पुरुषाय नमः ॥ इति मुखे । ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः । ॐ अघोराय नमः इति हृदये ॥ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमः । ॐवामदेवाय नमो गुह्ये ॥ ॐसद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवेभवेनातिभवे भवस्व मां भवोद्भवाय नमः ॥ ॐ सद्योजाताय नमः पादयोः॥ ॐप्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ॥ सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्मान् पुनरासदः ॥ इति मन्त्रेण प्रणवेन वा सर्वाङ्गेषु भस्म विलिम्पेत् । ततः स्नात्वाचम्य गोमयस्नानं कुर्यात् । तद्यथा—शुद्धगोमयमादाय । प्रणवेन दिक्षु दक्षिणभागं तीर्थे चोत्तरभागं प्रक्षिप्य शेषम् ॐ अग्रमग्रं चरन्तीनामोषधीनां रसं वने । तासां वृषभपत्नीनां पवित्रं कायशोधनम् ॥ यन्मे रोगांश्च शोकांश्च पापं मे हर गोमयं ॥ ॐ मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः । मानो व्वीरान्रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे ॥ इत्यभिमन्त्र्य सूर्याय दर्शयित्वा ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ इति मन्त्रेण दक्षिणहस्तगृहीतेन गोमयेन शिरसो नाभ्यन्तं वामहस्तगृहीतेन मन्त्र्यावृत्त्या नाभितः पादपर्यन्तं विलेपनमिति सर्वाङ्गमालिप्य स्नात्वा द्विराचामेत् ॥ अथ मृत्तिकास्नानम् ॥ शुद्धतीर्थमृत्तिकामादाय । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । मृत्तिके हर मे पापं यन्मया कायसंचितम ॥ १ ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥२॥ त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ इत्यभिमन्त्र्य । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरेस्वाहा । इति मन्त्रेण शिरःप्रभृत्यङ्गानि विलिम्पेत् । ततो द्विराचम्य शुद्धोदकस्नानं कुर्यात् । ॐ आपो हि ष्ठा मयो भुवस्तानऽऊर्ज्जे दधातन ॥ महेरणाय चक्षसे ॥१॥ यो वः शिवतमो रसस्तस्य भाजयतेहनः॥ उशतीरिव मातरः ॥ २ ॥ तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३ ॥ इति स्नात्वा आचम्य पञ्चगव्यस्नानं कुर्यात् । गायत्र्या गोमूत्रम् ॥१॥ गन्धद्वारेति गोमयम् । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ २ ॥ आप्यायस्वेति पयःस्नानम् । ॐ आप्यायस्वसमेतुते व्विश्वतः सोमवृष्ण्यम् । भवाव्वाजस्य संगथे ॥ ३ ॥ दधिक्राव्णेति दाधिस्नानम् ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः । सुरभिनोमुखाकरत् प्रणऽआयुꣳषि तारिषत् ॥ तेजोसीत्याज्यस्नानम् ॥ ॐ तेजोसि शुक्रमस्यमृतमासि धामनामासि प्रियं

देवानामनाधृष्टं देवयजनमसि ॥ ५ ॥ देवस्य त्वेति कुशोदकस्नानम् । ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ ६ ॥ एवं पञ्चगव्यस्नानं कृत्वा शुद्धोदकेन स्नात्वा जले अघमर्षणम् । द्रुपदादिवेतिच वारत्रयमावर्तयेत् । ततः स्नानाङ्गतर्पणम् । सव्येन प्राङ्मुखः—ॐभूर्देवांस्तर्पयामि । ॐ भुवर्देवांस्तर्पयामि । ॐस्वर्देवांस्तर्पयामि । ॐ भूर्भुवःस्वर्देवांस्तर्पयामि । निवीतिना ॐभूः ऋषींस्त० । ॐभुवर्ऋषींस्त० । ॐस्वर्ऋषींस्त० । ॐभूर्भुवः स्वः ऋषींस्तर्पयामि । अपसव्येन—ॐ भूः पितॄंस्तर्पयामि । ॐ भुवः पितॄं० । ॐस्वः पितॄं० । ॐभूर्भुवः स्वः पितॄंस्तर्पयामि । ततः सव्येन ॐब्रह्मादयो देवास्तृप्यन्ताम् ॥१॥ ॐ गौतमादय ऋषयस्तृप्यन्ताम् ॥ १ ॥ इति देवतीर्थेन एकैकमञ्जलिं जले क्षिपेत् । तत उदङ्मुखो यज्ञोपवीतं कण्ठीकृत्य ॐसनकादयो मनुष्यास्तृप्यन्ताम् ॥ २ ॥ इति प्रजापतितीर्थेन अञ्जलिद्वयं दद्यात् । ततोऽपसव्येन दक्षिणामुखः कृष्णतिलोदकैः ॐ कव्यवाडनलादयो देवपितरस्तृप्यन्ताम् ॥ ३ ॥ ॐअस्मत्पितृपितामहप्रपितामहास्तृप्यन्ताम ॥ ३ ॥ ॐ अस्मन्मातृपितामहीप्रपितामह्यस्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातामहीप्रमातामहीवृद्धप्रमातामह्यस्तृप्यन्ताम् ॥ ३ ॥ ॐ आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यताम् ॥ ३ ॥ एवं तर्पणं कृत्वा । ॐ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः । तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ इति यक्ष्मणे जलं दद्यात् । ततस्तीरमागत्य ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ ३ ॥ इति जलाञ्जलिं तटे निःक्षिपेत् । एवं स्नानाङ्गतर्पणं कृत्वा स्थले स्नानवस्त्रं संपीडच सव्येनाचम्य सूर्यायार्घं दद्यात् " ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां देव गृहाणार्घ्यं नमोऽस्तु ते ॥ १ ॥ ततो जलाद्बहिर्निष्क्रम्य अहतं श्वेतं सदशं धौतं वस्त्रं परिधाय उपवस्त्रं गृहीत्वा द्विराचामेत् । ततो यथाचारं भस्मचन्दनादिना तिलकं कुर्यात् ॥ अथ प्रायश्चित्ताङ्गविष्णुपूजाप्रयोगः । देशकालौ संकीर्त्य श्रीविष्णुप्रीत्यर्थं प्रायश्चित्ताङ्गत्वेन पुरुषसूक्तेन श्रीमहाविष्णुपूजां करिष्ये इति संकल्प्य स्वपुरतः चतुरस्रं हस्तमात्रं स्थण्डिलं कृत्वा तदुपरि श्वेतवस्त्रं प्रसार्य तत्र तण्डुलैरष्टदलं कृत्वा तन्मध्ये ताम्रकलशं स्थापयेत् ॥ तद्यथा । ॐ भूरसि भूमिरस्यदितिरसि व्विश्वधाया व्विश्वस्य भुवनस्य धर्त्रीम् ॥ पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥ इति कलशाधारभूमिं स्पृष्ट्वा ॥ १ ॥ तत्र ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्व्यानाय त्वा दीर्घामनुप्रसितिमायुषेधान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि ॥ इति धान्यं क्षिप्त्वा ॥ २ ॥ तस्योपरि ॐ आजिघ्रकलशं मह्या त्वा व्विशन्त्विन्दवः ।

पुनरूर्जानिवर्त्तस्व सा नः ॥ सहस्रं धुक्ष्वोरुधारा पयस्वतीः पुनर्माविशता-
द्रयिः ॥ इति ताम्रकलशं स्थापयेत् ॥ ३ ॥ ततः ॐव्वरुणस्योत्तम्भनमसि
व्वरुणस्य स्कम्भसर्ज्जनीस्थो व्वरुणस्यऋतसदन्न्यसि व्वरुणस्य ऋतसदनमसि
वरुणस्य ऋतसदनमासीद ॥ इतिकलशे जलमापूर्य ॥ ४ ॥ ॐ त्वां गन्ध-
र्व्वाऽअखनंस्त्वामिन्द्रस्त्वां बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान् यक्ष्माद-
मुच्यत ॥ " इतिगन्धम् ॥ ५ ॥ ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥
मनैनुबभ्रूणामहर्ठं शतं धामानि सप्त च ॥ इति सर्वौषधीः ॥ ६ ॥ ॐ काण्डा-
त्काण्डात् प्ररोहन्ती परुषः परुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेन च ॥
इतिदूर्वाम् ॥ ७ ॥ ॐ अश्वत्थेवो निषदनं पर्णेवो व्वसतिष्कृता ॥ गोभाजऽइत्कि
लासथयत्सनवथ पूरुषम् ॥ इति पञ्चपल्लवान् ॥ ८ ॥ ॐ स्योना पृथिवि नो
भवानृक्षरा निवेशनी ॥ यच्छानः शर्म सप्रथाः ॥ इति सप्तमृदः ॥ ९ ॥ ॐ याः
फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिः प्रसूतास्तानो मुञ्चन्त्वर्ठं-
हसः ॥ इति पूगीफलम् ॥ १० ॥ ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥ इतिपञ्चरत्नानि ॥ ११ ॥ ॐ हिरण्यगर्भः समवर्ततताग्रे
भूतस्य जातः पतिरेक आसीत् ॥ सदाधार पृथिवीं द्यामुते मां कस्मै देवाय हविषा
विधेम ॥ इतिहिरण्यम् ॥ १२ ॥ ॐ सुजातो ज्योतिषा सह शर्मव्वरूथमास-
दत्स्वः ॥ व्वासोऽअग्नेव्विश्वरूपर्ठं संव्ययस्व व्विभावसो ॥ इति वस्त्रं कण्ठे वेष्ट-
येत् ॥ १३ ॥ ॐपूर्णादर्विपरापत सुपूर्णा पुनरापत । वस्नेव व्विक्रीणावहाऽइषमू-
र्जर्ठं शतक्रतो ॥ इतिपूर्णपात्रं निधाय ॥ १४ ॥ ॐ मनोजूतिर्जुषतामाज्यस्येति
प्रतिष्ठां कृत्वा तत्र ॐ तत्वायामि ब्रह्मणावन्दमानस्तदाशास्ते यजमानोहविर्भिः ॥
अहेडमानो व्वरुणे हवोद्ध्युरुशर्ठं समानऽआयुःप्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुण
इहागच्छ इह तिष्ठ इत्यावाह्य ॐ अपां पतये वरुणाय नमः । इति षोडशोपचारैः
संपूज्य । कलशस्य मुखे विष्णुः० इत्याद्यभिमन्त्र्य ॥ ॐ देवदानवसंवादे०
इति कलशं प्रार्थयेत् । ततस्तदुपरि पट्टवस्त्रं प्रसार्य तत्र गन्धेन अष्टदलं यंत्रं
विलिख्य तन्मध्ये तुलसीदलोपरि शालग्रामप्रतिमाम् अथवा स्वर्णमयीं विष्णु-
मूर्त्तिम् अग्न्युत्तारणपूर्विकां स्थापयेत् ॥ तत्र स्वर्णमूर्त्तिश्चेत्तर्हि मूर्त्तिं पात्रे निधाय
घृतेनाभ्यज्य तदुपरि दुग्धजलधारां दद्यात् । सूक्तं च पठेत् । तत्र मन्त्राः ॥
ॐ समुद्रस्य त्वा वकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यर्ठं शिवो भव ॥ १ ॥
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि ॥ पावकोऽअस्मभ्यर्ठं शिवो भव ॥ २ ॥
अपामिदंन्ययनर्ठं समुद्रस्य निवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽ-
अस्मभ्यर्ठं शिवो भव ॥ ३ ॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्याँ-
स्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यर्ठं शिवो भव ॥ ४ ॥ प्राणदाऽअपानदा

व्यानदाव्वर्च्चोदाव्वरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यर्ठ॰ शिवो भव ॥ ५ ॥ इत्यग्न्युत्तारणसूक्तम् ॥ ततः पंचामृतेन संस्नाप्य । ॐ आपोहिष्ठेत्यादि त्र्यृचेन शुद्धजलेन प्रोक्ष्य । स्थापितकलशोपरि संस्थाप्य ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञर्ठ॰समिमं दधातु ॥ विश्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥ १ ॥ इति प्रतिष्ठाप्य पुष्पाणि विकीर्य स्वशरीरे देवाङ्गे च पुरुषसूक्तन्यासं कुर्यात् ॥ "देवो भूत्वा देवं यजेत" इति वाक्यात् ॥ अथाङ्गन्यासः । सहस्रशीर्षेत्यादिषोडशर्चस्य सूक्तस्य नारायण ऋषिः । पुरुषो देवता । अनुष्टुप् छन्दः । अन्त्यायास्त्रिष्टुप् छन्दः । न्यासे पूजायां च विनियोगः ॥ ॐ सहस्रशीर्षा॰ ॥ इति वामकरे ॥ १ ॥ ॐ पुरुषऽएवेदर्ठ॰सर्वम् ॥ इति दक्षिणकरे ॥ २ ॥ ॐ एतावानस्य महिमा॰ ॥ इति वामपादे ॥ ३ ॥ ॐ त्रिपादूर्ध्व॰ ॥ इति दक्षिणपादे ॥ ४ ॥ ॐ ततोव्विराट्॰ ॥ इति वामजानुनि ॥ ५ ॥ ॐ तस्माद्यज्ञात्सर्वहुतः॰ ॥ इति दक्षिणजानुनि ॥ ६ ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः॰ ॥ इति वामकटौ ॥ ७ ॥ ॐ तस्मादश्वा॰ ॥ इति दक्षिणकटौ ॥ ८ ॥ ॐ तं यज्ञम्॰ ॥ इति नाभौ ॥ ९ ॥ ॐ यत्पुरु॰ ॥ इति हृदये ॥ १० ॥ ॐ ब्राह्मणोस्य॰ ॥ इति कण्ठे ॥ ११ ॥ ॐ चन्द्रमा मनसो॰ ॥ इति वामबाहौ ॥ १२ ॥ नाभ्याऽआसीत्॰ ॥ इति दक्षिण बाहौ ॥ १३ ॥ ॐ यत्पुरुषेण॰ ॥ इति मुखे ॥ १४ ॥ ॐ सप्तास्यासन्॰ इति नेत्रयोः॥ १५ ॥ ॐ यज्ञेन यज्ञमय॰ ॥ इति मूर्ध्नि ॥१६॥ अथ पञ्चाङ्गन्यासः । ॐ अद्भ्यः संभृतः॰ ॥ इति हृदये ॥ १ ॥ ॐ व्वेदाहमेतम्॰ ॥ इति शिरसि॥२॥ ॐ प्रजापतिश्च॰ ॥ इति शिखायै वषट् ॥ ३ ॥ ॐ यो देवेभ्यऽआतपति॰ ॥ इति कवचाय हुम् ॥ ४ ॥ ॐ रुचम्ब्राह्मञ्जनयन्तो॰ ॥ इत्यस्त्राय फट् ॥ ५ ॥ एवं न्यासं कृत्वा कलशं शंखघण्टे च संपूज्य देवं ध्यायन् घण्टानादं कृत्वा पूजां कुर्यात् ॥ तत्र प्रयोगः ॥ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिर्ठ॰ सर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ॐ श्रीमहाविष्णवे नमः ॥ आवाहनं समर्पयामि । इत्यावाहनम् ॥ १ ॥ ( शालग्रामपूजायामावाहनाभावात्पत्रपुष्पं निवेदयेत् । ) ॐ पुरुषऽएवेदर्ठ॰ सर्व्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ ॐ महाविष्णवे नमः आसनं सम॰ ॥ ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः ॥ पादोऽस्य व्विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥ ॐ महाविष्णवे नमः पाद्यं सम॰ ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः॥ ततो व्विष्वङ् व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ॐ महाविष्णवे नमः अर्घ्यं सम॰ ॥ ॐ ततो व्विराडजायत व्विराजोऽअधिपूरुषः ॥ स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ॐ महाविष्णवे नमः आचमनीयं स॰ । ॐ तस्माद् यज्ञात्

सर्व्वहुतः सम्भृतम्पृषदाज्यम् । पशूँस्ताँश्चक्रे व्वायव्यानारण्या ग्ग्राम्याश्च ये॥ ५ ॥ ॐ महाविष्णवे नमः स्नानं स० । ॐ पयः पृथिव्यामित्यादिमन्त्रैः पृथक् पृथक् पंचामृतस्नानं शुद्धोदकस्नानं च पुरुषसूक्तेनाभिषेकश्च कार्यः ॥ ॐ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे ॥ छन्दाᳬंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ ॐ महाविष्णवे० वस्त्रं स० ॥ वस्त्रान्ते आचमनं स० ॥ ॐ तस्मादश्वाऽअजायन्त येकेचोभयादतः ॥ गावोह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥ ॐ महाविष्णवे० उपवीतं स० ॥ उपवीतान्ते आचमनं स० । ॐ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्ग्रतः । तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥ ९ ॥ ॐमहाविष्णवे नमः चन्दनं स०॥ॐयत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखङ्किमस्यासीत्किं वाहू किमुरू पादा उच्येते ॥ १० ॥ ॐमहाविष्णवे नमः । पुष्पाणि तुलसीपत्राणि च स० ॥ ॐब्राह्मणोऽस्यमुखमासीद् वाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्याᳬंशूद्रोऽअजायत ॥ ११ ॥ ॐमहाविष्णवे नमः धूपं स० ॥ ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥ ॐ महाविष्णवे नमः दीपं सम० ॥ ॐनाभ्याऽआसीदन्तरिक्षᳬं शीर्ष्णोद्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन् ॥ १३ ॥ ॐमहाविष्णवे नमः नैवेद्यं स० ॥ नैवेद्यान्ते आचमनं स० ॥ ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः॥१४ ॥ महाविष्णवे नमः मुखवासार्थं ताम्बूलं स० ॥ ॐ हिरण्यगर्भः समवर्तता० ॥१५॥ ॐमहाविष्णवे नमः दाक्षिणां स० ततो नीराजनं कुर्यात् ॐसप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽअवध्नन्पुरुषम्पशुम् ॥ १५ ॥ ॐ महाविष्णवे नमः प्रदक्षिणाचतुष्टयं स० ॥ ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ तेह नाकम्महिमानःसचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥ १६ ॥ महाविष्णवे नमः मन्त्रपुष्पाञ्जलिं स० ॥ ततः साष्टाङ्गप्रणामः ॥ ॐ अद्भ्यः सम्भृतः ० ॥ १ ॥ ॐ वेदाहमेतम्० ॥ २ ॥ ॐ प्रजापतिश्चरति० ॥ ३ ॥ ॐ यो देवेभ्यऽआतपति० ॥ ४ ॥ ॐ रुचम्ब्राह्मञ्जनयन्तो० ॥ ५ ॥ ॐ श्रीश्च ते लक्ष्मीश्च० ॥ ६ ॥ ॐ महाविष्णवे नमः स्तुतिपाठं स०॥ ॐ अनेन षोडशोपचारपूजनेन पापहा श्रीमहाविष्णुः प्रीयताम् इति परमेश्वरार्पणं कुर्यात् । एवं विष्णुपूजां कृत्वा पुरुषसूक्तेन प्रत्यृचं सन्तर्प्य मन्त्रान्ते सर्वत्र भगवान् पापापहा महाविष्णुस्तृप्यताम् इति पठेत्॥ इति विष्णुतर्पणम् ॥ अथ विष्णुश्राद्धम् । आचम्य देशकालौ संकीर्त्य प्रायश्चित्ताङ्गतया विष्णुश्राद्धसम्पत्तये श्रीविष्णूद्देशेनाधिकयुग्मब्राह्मणभोजनपर्याप्तमामं तन्निष्क्रयद्रव्यदानं करिष्ये ॥ इति संकल्प्य । ब्राह्मणं गन्धादिना सम्पूज्य पापापहश्रीविष्णुप्रीतये विष्णुश्राद्धस्य सम्पूर्णता-

सिद्ध्यर्थं युग्मब्राह्मणभोजनपर्याप्तमामान्नं तन्निष्क्रयद्रव्यं वा अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । एवं चतुर्भ्यो ब्राह्मणेभ्यो दत्त्वा प्रायश्चित्ताङ्गमादौ गोदानं तन्निष्क्रयद्रव्यं वा दद्यात् ॥ तत्र प्रत्यक्षगोदानपक्षे—देशकालौ संकीर्त्य प्रारीप्सितप्रायश्चित्तस्य पूर्वाङ्गतया विहितं गोदानं करिष्ये । इति संकल्प्य ब्राह्मणं वृत्वा यथाविधि ब्राह्मणपूजनं धेनुपूजनं च कुर्यात् । ततो गोपुच्छे देवर्षिपितृतर्पणं कृत्वा कांस्यपात्रे गोपुच्छं निधाय दुग्धतिलकुशसुवर्णयुतं कृत्वा दक्षिणहस्तेन गृहीत्वा देशकालौ संकीर्त्य मम समस्तपापक्षयार्थं पापापहश्रीमहाविष्णुप्रीत्यर्थमिमां गां सवत्सां सोपस्करां यथाशक्तिविभूषितां रुद्रदैवतां तुभ्यमहं संप्रददे इत्युच्चार्य संकल्पजलयुतं गोपुच्छं विप्रहस्ते दद्यात् ॥ ॐ यज्ञसाधनभूता या विश्वस्याघौघनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ १ ॥ इति प्रार्थयेत् । ततः गोदानसाङ्गतासिद्ध्यर्थं विप्राय दक्षिणां दत्त्वा अनेन गोदानकर्मणा पापापहश्रीमहाविष्णुः प्रीयताम् इति जलमुत्सृजेत् । गोदानासम्भवे यथाशक्ति तन्मूल्यं देयम् । तद्यथा देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितं यथाशक्ति गोनिष्क्रयीभूतद्रव्यदानं करिष्य इति संकल्प्य । ब्राह्मणं सम्पूज्य देयद्रव्यं गृहीत्वा देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितमिदं गोनिष्क्रयीभूतं यथाशक्ति रजतद्रव्यं तुभ्यमहं सम्प्रददे इति दद्यात् । नात्र दक्षिणा ॥ इति प्रायश्चित्तधेनुदानम् ॥ प्रायश्चित्तहोमः ॥ तत्रादौ शुद्धमृदा चतुरस्रं स्थण्डिलं कृत्वा देशकालौ संकीर्त्य अद्य प्रायश्चित्तपूर्वाङ्गतया विहितमाज्येन सह पञ्चगव्यहवनं करिष्ये ॥ तदङ्गतया पंचभूसंस्कारपूर्वकमग्निस्थापनं च करिष्ये इति संकल्प्य । पञ्चभूसंस्कारान्कुर्यात् तद्यथा—हस्तमात्रपरिमिते चतुरंगुलोच्छ्रिते तुषकेशशर्करादिरहिते चतुरस्रे वा वर्तुले स्थण्डिले भूमिं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणैवानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य ततः कांस्यपात्रस्थं वह्निं द्वितीयकांस्यपात्रेणापिहितमुपसमाधाय आनीतमग्निं स्थण्डिलस्याग्नेय्यां निधाय ॐ हुं फट् इति मन्त्रेण क्रव्यादांशं नैर्ऋत्यां दिशि किञ्चित्परित्यज्य । ततः ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे । देवाँ २ आसादयादिह ॥ १ ॥ इति मन्त्रेणात्माभिमुखं स्थापयेत् । ततः आनीताग्नेयपात्रयोः साक्षतोदकं निषिच्य । अग्निमुखं कृत्वा ध्यायेत् ॥ ॐ चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ २ आविवेश ॥ १ ॥ अग्ने वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेतित्रिप्रवरान्वित भूमिमातः वरुणपितः मेषध्वज प्राङ्मुख मम संमुखो भव इत्यग्निं प्रतिष्ठाप्य ॐ विट्नाम अग्निपुरुषाय नमः । इति मन्त्रेण वायव्यकोणे बहिः अग्निं षोडशोपचारैः सम्पूज्य प्रार्थयेत् । अग्निं प्रज्वलितं वन्दे जातवेदं

हुताशनम् ॥ हिरण्यवर्णमनलं समृद्धं विश्वतोमुखम् ॥ इत्यग्निस्थापनम् । ततोग्नेर्दक्षिणतः परिस्तरणभूमिं त्यक्त्वा ब्रह्मणे कुशाद्यासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अस्मिन्प्रायश्चित्तहोमकर्मणि त्वं मे ब्रह्मा भव इत्यभिधाय पञ्चाशत्कुशनिर्मितं कल्पितासने उपवेशयेत् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशत्रयेणाच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय चतुर्भिश्चतुर्भिर्दर्भैरुत्तराग्रैः प्राच्याम् १। प्रागग्रैर्दक्षिणस्याम् २। उदगग्रैः प्रतीच्याम् ३। पुनः प्रागग्रैरग्नितः उदीच्याम् ४ परिस्तरणं कुर्य्यात् ॥ ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं पवित्रे साग्रे अनन्तर्गर्भे द्वे कुशपत्रे २ प्रोक्षणीपात्रम् १आज्यस्थाली १ सम्मार्जनकुशाः पञ्च ५ उपयमनकुशाः सप्त ७ समिधस्तिस्रः पालाश्यः प्रादेशमात्राः स्रुवः खादिरो हस्तमात्रः १ आज्यं गव्यम् । तत्रैव पलाशपत्रं यज्ञियकाष्ठं हरितानि सप्त कुशपत्राणि गोमूत्रादीनि पृथक् पृथक् पञ्चगव्यानि पूर्णपात्रम् १ दक्षिणावरो वा । एतानि द्रव्याणि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनम् ॥ पवित्रकरणम् ॥ द्वयोः पवित्रयोरुपरि कुशत्रयं निधाय अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वे कुशतृणे प्रच्छिद्य द्वयो मूलं त्रीणि चोत्तरतः क्षिपेत्॥ततः सपवित्रहस्तेन प्रणीतोदकं त्रिःप्रोक्षणीपात्रे निक्षिप्य । अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ प्रोक्षणीपात्रस्य सव्यहस्ते करणम्—अनामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुदिङ्गनम् ॥ ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् ॥ प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि क्रमेणैककशः प्रोक्ष्य असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निधाय आसादितमाज्यं पश्चादग्नेर्निहितायामाज्यस्थाल्यां प्रक्षिप्याधिश्रित्य। आज्याधिश्रयणानन्तरं पलाशपत्रपुटे ताम्राया गोमूत्रम् अष्टमाषं गायत्र्याऽऽदाय। श्वेताया गोमयं षोडशमाषं गन्धद्वारेतिमन्त्रेण निक्षिप्य पीताया गोः क्षीरमष्टमाषम् ॐ आप्यायस्वेति मन्त्रेण ग्राह्यम् । नीलाया गोर्दधि षण्माषकम् ॐदधिक्राव्णेति। कृष्णायां गोर्घृतमष्टमाषकम् ॐतेजोसीतिमन्त्रेण गृह्णीयात्। यथोक्ताया गोरभावे श्वेतायाअपि गोमूत्रादिकं ग्राह्यम् । तत ॐदेवस्यत्वा इतिमन्त्रेण कुशोदकं चतुर्माषं च प्रक्षिप्य । यज्ञकाष्ठेनालोड्य प्रणवेनाभिमन्त्रयेत् । ततो ज्वलत्तृणोल्मुकं प्रदक्षिणं साज्यस्य पञ्चगव्यस्योपरि समन्ताद्भ्रामयेत् । ततो दक्षिणपाणिना स्रुवमादाय अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोग्रपर्यन्तं मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं सम्मृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रताप्य दक्षिणतो निदध्यात्॥ तत आज्यमुत्थाप्य पूर्वेण नीत्वाग्नेरुत्तरतः स्थापयित्वा त्रिः प्रोक्षणीवदुत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः प्रोक्षण्युत्पवनम् । तत उत्थाय

उपयमनकुशान् वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्ताः तिस्रः समिधः प्रक्षिपेत् । उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुर्ब्रह्मणाऽन्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ ( तत्राहुत्यनन्तरं स्रुवावस्थितहुतशेषस्य घृतस्य प्रोक्षणी पात्रे प्रक्षेपः ) ॥ अथ होमः ॥ ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम ॥१॥ [ इतिमनसा ] ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम ॥ २ ॥ [ इत्याघारौ ] ॐभूः स्वाहा इदमग्नये० । ॐभूवः स्वाहा इदं वायवे न मम ॥ ॐ स्वः स्वाहा इदं सूर्याय न मम । ॐभूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम ॥ (एवं सप्तवारान् कृत्वा अष्टाविंशत्याहुतयो भवन्ति । एवं सप्तविंशतिवारान् कृत्वा अष्टोत्तरशताहुतयो भवन्ति ) । एवमष्टोत्तरशताहुतीर्हुत्वा पञ्चगव्यहोमं कुर्यात् । तत्र साग्रैः सप्तपत्रकुशैः पञ्चगव्यं गृहीत्वा दशाहुतीर्जुहुयात् । ॐइरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्णवे ते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा । इदं पृथिव्यै न० । १ । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳ सुरे स्वाहा । इदं विष्णवे न० । २ । ॐ मानस्तोके तनये मान आयुषि मानो गोपु मानोऽअश्वेषु रीरिषः । मानोव्वीरान् रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे स्वाहा । इदं रुद्राय न० । ३ । अत्रोदकोपस्पर्शः । ॐशन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नःस्वाहा । इदमदभ्यो न० । ४ । ॐब्रह्मजज्ञानम्प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः । सबुध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा । इदं ब्रह्मणे न मम । ॐअग्नये स्वाहा। इदमग्नये न मम ।५। ॐसोमाय स्वाहा इदं सोमाय । ७ । ॐ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्स्वाहा । इदं सवित्रे न० । ८ । ॐ स्वाहा इदं परमेष्ठिने न मम । ९ । ॐभूर्भुवः स्वः स्वाहा । इदं प्रजापतये न मम । १० । ॐअग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न० । ११ । ततो ब्रह्मणान्वारब्धः आज्येन-ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम । ततो भूराद्या नवाज्याहुतयः । ॐ भूः स्वाहा इदमग्नये न मम १ ॐभुवः स्वाहा इदं वायवे न मम २ ॐ स्वः स्वाहा इदं सूर्याय न मम ३ ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः यजिष्ठो व्वह्नितमः । शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा ४ इदमग्नीवरुणाभ्यां न मम । ॐसत्वन्नोऽअग्ने व्वमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो व्वरुणꣳरराणोव्वीहिमृडीकꣳसुहवोनऽ एधि स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम । ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमयाऽआसि । अयानोयज्ञं व्वहास्ययानोधेहिभेषजꣳस्वाहा ६ इदमग्नये न मम । ॐ ये ते शतं व्वरुण-

ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ७ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । ॐ उदुत्तमं व्वरुणपाशमस्मदवाधमं व्विमद्ध्यमᳯश्रथाय । अथावयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा ८ इदं वरुणायादित्यायादितये च न मम । ॐ प्रजापतये स्वाहा ९ इदं प्रजापतये न मम । इति नवाहुतीर्हुत्वा ततः उत्थाय पुष्पफलचन्दनयुतघृतपूर्णस्रुवेण ॐ मूर्द्धानं दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजातमग्निम् कविᳯसंम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा। इदं मृडाग्नये न मम इति पूर्णाहुतिं दद्यात्॥ ततः संस्रवप्राशनमाचमनं च कुर्यात् । ततो देशकालौ संकीर्त्य । अद्य कृतैतत्प्रायश्चित्तहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षिणां दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । ततो ब्रह्मग्रन्थिविमोकः । ॐ सुमित्रियानऽआपऽओषधयः सन्त्विति पवित्राभ्यां प्रणीताजलेन शिरः संमृज्य । ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । इत्यैशान्यां प्रणीतान्युब्जीकरणम्। अग्नौ पवित्रप्रतिपत्तिः । ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य हस्तेनैव जुहुयात् । ॐ देवा गातु विदोगातुं वित्वा गातुमित । मनसस्पतऽइमं देवयज्ञᳯ स्वाहा व्वातेधाः स्वाहा १ इति बर्हिर्होमः । ॐ त्र्यायुषं जमदग्नेरिति ललाटे। ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे। ॐ तन्नोऽअस्तु त्र्यायुषमिति हृदि । इत्यनामिकाग्रगृहीतभस्मना त्र्यायुषं कुर्यात् । एवं प्रायश्चित्तहोमशेषं समाप्य। व्रतग्रहणं करिष्ये इति द्विजान् पृष्ट्वा कुरुष्वेत्यनुज्ञातः । ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके। प्राशनं पंचगव्यस्य दहत्यग्निरिवेन्धनम् ॥ १ ॥ इति पठित्वा ॐ प्रणवेन गृहीत्वा ॐ प्रणवेनैव सर्वं पञ्चगव्यं पिबेत्। ( अशक्तौ गोमूत्राद्यल्पं ग्राह्यं सर्वस्य पेयत्वात् । एतच्च सर्वं ग्रामाद्बहिर्नद्यादेस्तीरे नक्षत्रदर्शने कार्यम् । व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने। इति स्मृतिवाक्यात् ) मुमूर्षोस्तु गृहादावेव कार्यम् । अस्मिन् दिन उपवासः । अशक्तौ हविष्याशनम् । ( अयं च पञ्चगव्यस्य दशाहुतिहोमो ब्रह्मकूर्चाख्यपञ्चगव्यपाने सर्वत्र ज्ञेयः ) ततो गृहमागत्य प्रातरारभ्य संकल्पितप्रायश्चित्तं संकल्पितप्रत्याम्नायानुसारेणानुष्ठायोत्तरांगानि कुर्यात् गोनिष्क्रयरजतादिदानपक्षे तु पञ्चगव्यप्राशनान्ते देशकालौ संकीर्त्य । अमुकशर्मणो मे जन्मप्रभृत्यद्य यावज्ज्ञाताज्ञातकामाकामसकृदसकृत्कायिकवाचिकमानासिकसांस-

गिंकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीत-सकलपातकातिपातकोपपातक-लघुपातकसङ्क-रीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णपातकानां मध्ये संभावितानां पापानां निरासार्थं गोनिष्क्रयरजतद्रव्यदानप्रत्याम्नायेनाङ्गीकृतस्य षडब्दप्रायश्चि-त्तस्य संसिद्ध्यर्थमशीत्यधिकशतगोनिष्क्रयभूतं प्रतिकृच्छ्रं निष्कं वा तदर्धं वा तदर्धप्रमाणरजतं चन्द्रदैवतं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे । इति द्रव्यदानसंकल्पं कृत्वा तदेव द्रव्यं विभज्य ब्राह्मणेभ्यो दत्त्वोत्तराङ्गानि कुर्यात् । तद्यथा देशकालौ संकीर्त्य । आचीर्णस्य प्रायश्चित्तस्य साङ्गतासिद्ध्यर्थ मुत्तराङ्गानि करिष्ये । इति सङ्कल्प्य । पूर्ववत् स्थंडिलेऽग्निं प्रतिष्ठाप्य ब्रह्मोपवे-शनाद्याज्यभागपर्यन्तं कृत्वा व्याहृतिभिराज्यहोममुक्तसंख्यया कुर्यात् । नात्र पञ्चगव्यहोमः । ततो भूरादिस्विष्टकृदंतमाहुतिदशकं जुहुयात् । ततःपूर्ववत् होमं समाप्य विष्णुश्राद्धसम्पत्तये आमान्नचतुष्टयनिष्क्रयभूतं द्रव्यं दत्त्वा गोदानं कृत्वा । कृतैतत्प्रायश्चित्तकर्मणः साङ्गतासिद्ध्यर्थं ब्राह्मणान्भोजयिष्ये इति संकल्प्य । प्रायश्चित्तानुसारेण यथाशक्ति सहस्रं शतं पञ्चाशतं पञ्चविंशतिं द्वादश वा ब्राह्मणान् भोजयेत् । ततो यस्य स्मृत्येत्युक्त्वा परमेश्वरार्पणं कुर्यात् । इति सर्वप्रायश्चित्तप्रयोगः॥अथ स्त्रीकृतप्रायश्चित्ते विशेषः॥स्त्रीणां होमः कृताकृतः। करणपक्षे विधवायाः क्षौरान्ते पूर्ववत् कृत्वा अमन्त्रकाणि दश स्नानानि । सधवा-यास्तु सङ्कल्पान्ते दन्तधावनं कृत्वा तूष्णीं दश स्नानानि । वस्त्रपरिधानान्ते विष्णुश्राद्धगोदानानि कृत्वा प्रायश्चित्तहोमार्थमाचार्यं त्वां वृणे इति विप्रं वृत्वा पूर्ववद्विप्रद्वारा सर्वं पूर्वाङ्गं कारयित्वा स्वयं पञ्चगव्यं तूष्णीं प्राश्य मुख्यप्रत्या-म्नायद्रव्यं विसृज्योत्तराङ्गानि कारयेत् ॥ होमाभावपक्षे दशविधस्नानान्ते विष्णु-श्राद्धगोदाने कृत्वा विप्रेण पञ्चगव्यं कारयित्वा तूष्णीं प्राश्य प्रायश्चित्तद्रव्यं सङ्कल्प्य दत्त्वोत्तराङ्गविष्णुश्राद्धगोदानदशदानानि कुर्यात् ॥ अथ शूद्रस्य संकल्पान्तमवि-कृतं प्राग्वत् ॥ ततः क्षौरान्तेऽमन्त्रकदशस्नानानि वस्त्रतिलकधारणान्ते विष्णुश्रा-द्धगोदाने कृत्वा विप्रद्वारा पंचगव्यं कारयित्वा तूष्णीं पिबेत् ॥ शूद्रेण कापिलायाः पञ्चगव्यानि न पेयानि ॥ नास्य विप्रद्वाराऽपि होमः । प्रायश्चित्तद्रव्यं संकल्प्य देवो-त्तराङ्गविष्णुश्राद्धगोदानानि दशदानानि च कुर्यात् ॥ इति स्त्रीशूद्रप्रयोगः ॥ एवमेव व्रात्यानांज्ञेयम् । अथ शक्तौ सत्यां दश दानानि । तत्रादौ गोदानम् । ब्राह्मणं सम्पूज्येति सर्वत्र बोध्यम् । देशकालौ स्मृत्वा गोदानलभ्यफलप्राप्तिकाम इदं गोनिष्क्रयभूतं द्रव्यं गोत्राय शर्मणे सुपूजिताय तुभ्यमहं सम्प्रददे । यज्ञसाधन-भूता या विश्वस्याघौघनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥गवामङ्गेषु

तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ इति प्रार्थयेत् । अथ भूमिदानम् । सर्वपापक्षयकाम इदं निवर्त्तनपरिमित(३००हस्त) भूमिनिष्क्रयभूतं द्रव्यं तुभ्यमहं सम्प्रददे । भूमिदानपक्षे इमां निवर्त्तमितां भूमिं बहुसस्यप्रदां विष्णुदेवतां तुभ्यम० इति संकल्पः । प्रार्थना—सर्वेषामाश्रया भूमिर्वराहेण समुद्धृता । अनन्तपुण्यफलदा अतः शान्तिं प्रयच्छ मे ॥१॥ यस्यां रोहन्ति बीजानि काले चैव महीतले । त्वत्प्रसादाच्च सकला मम सन्तु मनोरथाः ॥ २ ॥ इति । भूमिदानपक्षे कृतैतद्भूदानकर्मणः साङ्गतासिद्ध्यर्थं हिरण्यं तुभ्यमहं सम्प्रददे इति विशेषः । अथ तिलदानम् । इमां द्रोणत्रय ( ४८ सेर ) परिमितान् तिलान् प्रजापतिदैवतान् सर्वपापक्षयकामस्तुभ्यमहं सम्प्रददे । हिरण्यं दक्षिणा । प्रा० महर्षेर्गोत्रसम्भूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु इति । अथ हिरण्यदानम् । इदं हिरण्यं निष्क (४०मासा) परिमितमग्निदैवतं गोत्रा० रजतं हिरण्यं वा दक्षिणा । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ अथ आज्यदानम् । प्रस्थ (१ सेर ) परिमितमाज्यं विष्णुदैवतं सोमदैवतं वा तुभ्यमहं सम्प्रददे । हिरण्यं दक्षिणा । कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् । देवानामाज्यहारश्चातःशान्तिं प्रयच्छ मे ॥ अथ वस्त्रदानम् । अद्येत्यादि पठित्वा इमे वाससी अष्टहस्तमिते बार्हस्पत्ये सूक्ष्मे सर्वपापक्षयकामः तुभ्यमहं सम्प्रददे । हिरण्यं दक्षिणा । शीतवातोष्णसन्त्राणं लज्जाया रक्षणं परम् । देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥ अथ धान्यदानम् ॥ अद्येत्यादि अमुकगोत्राय अमुकशर्मणे इदं खारी ( ६ मन १६ सेर ) परिमितं धान्यं प्रजापतिदैवतं विश्वेदेवदैवतं वा तुभ्यमहं संप्रददे । "सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् । प्राणिनां जीवनं यस्मादतः शान्तिं प्रयच्छ मे । हिरण्यं दक्षिणा ॥ अथ गुडदानम् ॥ इमं षष्टिपल ( ३॥ सेर ) परिमितं गुडं रसवर्यं सोमदैवतं तुभ्यमहं संप्रददे । हिरण्यं दक्षिणा । यतो रसानां प्रवरः सदैवेक्षुरसो मतः । दानेनानेन मे तस्य परा लक्ष्मीः स्थिरा गृहे ॥ अथ रजतदानम् ॥ देशकालौ संकीर्त्य इदं निष्कत्रयपरिमितं रजतं चन्द्रदैवतं तुभ्यमहं संप्रददे । हिरण्यं दक्षिणा । प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा । शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छ मे ॥ अथ लवणदानम् ॥ अद्येत्यादि इदं सार्धखारी ( ९मन २६ सेर ) परिमितं लवणं सर्वरसोत्कृष्टं सोमदैवतं तुभ्यमहं संप्रददे । हिरण्यं दक्षिणा । यस्मादन्यरसाः सर्वे नोत्कृष्टा लवणं विना । शम्भोः प्रीतिकरं यस्मादतः शान्तिं प्रयच्छ मे॥एवं दशदानानि दत्त्वा॥मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर। यन्मया

दूषितं देव परिपूर्णं तदस्तु मे ॥ इति विष्णुं संप्रार्थ्य परमेश्वरार्पणं कुर्यात् ॥ अथ गोवधाद्येकैकपापे प्रायश्चित्तप्रयोगः॥ पूर्ववत् पर्षदं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत् । विप्रैः किं ते कार्यमित्यादिपृष्टे गोवृषनिष्क्रयं संकल्प्य ब्राह्मणाग्रे निधाय मयाऽमुकगोवधः कृतः । अथवा पलाण्डुगृञ्जनमांसादिभक्षणं कृतम् । यद्वाऽमुकस्त्रीगमनं कृतं तत्प्रायश्चित्तमुपादिशन्तु भवन्तः । इति यथापापमुच्चार्य स्पष्टं वदेत्। ततः ' सर्वे धर्मविवेक्तारः । ' इत्यादि प्रार्थनापूर्वकं कर्त्रा निबन्धपूजाऽनुवादकपूजने कृते सभ्याऽनुवादकमुखेन प्रायश्चित्तं कथयेयुः । त्वयाऽमुकगोवधः कृतस्तत्प्रायश्चित्तं त्रैमासिकव्रतं सप्तदशप्राजापत्यप्रत्याम्नायद्वारा वा सप्तदशगोदानतन्मूल्यदानेन वा पूर्वोत्तराङ्गसहितं त्वयाऽऽचरितव्यं तेन तव शुद्धिर्भविष्यतीत्यादि पूर्ववत् । अथवा त्वया मत्याऽभ्यासेन पलाण्डुगृञ्जनं कुक्कुटमांसं वा भक्षितं तत्प्रायश्चित्तं यतिचान्द्रायणं पुनःसंस्कारसहितं प्राच्योदीच्याङ्गसहितमाचरणीयं तेन तव शुद्धिर्भविष्यतीत्यादि । एवमगम्यागमनादावूह्यम् । ततः कर्ता देशकालौ संकीर्त्य पर्षदुपदिष्टं गोवधप्रायश्चित्तं त्रैमासिकव्रतममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितमाचरिष्ये । इति संकल्प्य । ततो वपनदंतधावनदशविधस्नानपूर्वाङ्गविष्णुपूजनविष्णुश्राद्धगोदानाज्यहोमपञ्चगव्यप्राशनान्ते यथासंकल्पितं मुख्यप्रायश्चित्तं कृत्वोत्तराङ्गानि कुर्यात् । इदं सर्वत्र सामान्यम् । एवमभक्ष्यभक्षणेऽपि पलाण्डुगृञ्जनकुक्कुटमांसादिभक्षणजनितपातकनिरासार्थं पर्षदुपादिष्टं पुनःसंस्कारसहितं यतिचान्द्रायणममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितमाचरिष्ये । इति संकल्प्य क्षौरादिपञ्चगव्यप्राशनादि पूर्ववत् कृत्वा चान्द्रायणं तत्प्रत्याम्नायं वा पुनरुपनयनं च कृत्वोदीच्याङ्गानि कुर्यात् । एवमेवागम्यागमनादौ द्रष्टव्यम् । रहस्यप्रायश्चित्ते तु न पर्षदुपस्थानं सभ्यानुवादकपूजनादिकम् । किंतु तत्प्रायश्चित्तं स्वयमेव ज्ञात्वा अथवा व्याजान्तरेण किंचित् दृष्ट्वा रहस्योक्तं प्रायश्चित्तं स्वयमेव रहसि संकल्प्य । महच्चेत् क्षौरसहितमन्यथा क्षौररहितं कार्यम् ।

इति श्रीरत्नगढनिवासिना कर्मकाण्डाचार्य—कर्मकाण्डकोविद—कर्मकाण्डभास्कर—श्रौतभूषण—इत्युपाधिचतुष्टयविभूषितेन पण्डितगौडश्रीचतुर्थीलालशर्मणा विरचिते प्रायश्चित्तप्रकाशे सामान्यतः सर्वप्रायश्चित्तप्रयोगः समाप्तः ॥

# अथ चान्द्रायणव्रतप्रयोगः ।

चतुर्दश्यां कृतनित्यक्रियः भस्मगोमयमृत्तिकापंचगव्यगन्धाक्षतपुष्पाण्यपामार्ग-दूर्वादर्भादीनि गृहीत्वा ग्रामाद्बहिर्जलस्थाने गत्वा तत्राचम्य, प्राणानायम्य देश-कालौ संकीर्त्य अमुकपापक्षयकामः अमुकशर्माहं चान्द्रायणव्रतं करिष्ये इति संकल्प्य । अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् इदमहमनृतात्स-त्यमुपैमि ॥ १ ॥ इति मन्त्रेण व्रतमादित्याय निवेद्य कृताञ्जलिर्नत्वा केशश्मश्रु-लोमनखानि श्मश्रूणि वा वापयित्वा । यदि तु प्रायश्चित्तार्थव्रतोद्देशो नो चेत्तदा वपनं विहायादित्याय व्रतं निवेद्य स्वगृह्योक्तविधिना स्नात्वा तद्दिने उपोष्य पर-दिने अमा चेत्तत्राप्युपोष्य पौर्णिमा चेत्पञ्चदश ग्रासान् भुञ्जीत ॥ इति व्रतग्रह-णम् । अथ नित्यप्रयोगः । तत्र प्रतिदिनमुदिते चन्द्रे दुग्धगन्धाक्षतपुष्पाणि दर्भाणि गोमयमश्वत्थपालाशान्यतमसमिधापट्कं घृतं ग्रासार्हहविषमिन्धनमाचम-नादिपात्राणि प्रादेशमात्रस्थण्डिलस्योत्तरतः संस्थाप्य आचम्य प्राणानायम्य सुमुखश्चैक० इत्यादि पठित्वा देशकालौ संकीर्त्य ममाऽमुकपापापनोदनार्थं यव-मध्यपिपीलिकामध्यान्यतमचान्द्रायणव्रताख्यं कर्माहं करिष्ये इति संकल्प्य उदितं चन्द्रमसं मानसोपचारैः संपूज्य दुग्धेन त्रिवारं तर्पणं कुर्यात् । तत्र मन्त्राः— ॐ आप्यायस्व समेतु ते विश्वतः सोमव्वृष्ण्यम् भवाव्वाजस्य संगथे ॐ सोमं तर्पयामि । ॐ सन्तेपयाᳬंसि समुयन्तु व्वाजाः संवृष्ण्यान्यभिमातिषाहः । ॐ चन्द्रं तर्पयामि । ॐ नवो नवो भवति जायमानोह्नांकेतुरुषसामेत्यग्रम् । भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरतेदीर्घमायुः । ॐचन्द्रमसं तर्पयामि ॥ ३ ॥ इति तर्पयित्वा । एतत्कर्माङ्गभूतं स्थण्डिले पञ्चभूसंस्कारपूर्वकं लौकिकाग्निस्थापनं करिष्ये इति संकल्प्य दर्भैः परिसमुह्य ३ गोमयोदकेनोपलिप्य ३ यज्ञकाष्ठेनो-ल्लिख्य ३ अनामिकाङ्गुष्ठेनोद्धृत्य ३ उदकेनाभ्युक्ष्य ३ अग्निमुपसमाधाय इत्यग्निं संस्थाप्य पूजयेत्तत्रान्यत्पात्रासादनम् ॐ चत्वारि शृङ्गा त्रयोअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश ॥ १ ॥ मुखं यः सर्वदेवानां हव्यभुक् कव्यभुक् तथा । देवानां च नमस्तस्मै विष्णवे पावकात्मने ॥ २ ॥ इति मन्त्रेणाग्निं संमुखीकृत्य ॐ अग्नये गन्धं नम इत्यादि पञ्चोपचारैः संपूज्य तर्पणोक्तमन्त्रैरेवाज्यहोमं कुर्यात् । मन्त्राः ॐ आप्यायस्व समेतु ते विश्वतः सोम व्वृष्ण्यम् भवाव्वाजस्य संगथे स्वाहा । इदमग्नये न मम ॥ १ ॥ ॐ सन्ते पयाᳬंसि समयन्तु व्वाजाः संवृष्ण्यान्यभिमातिषाहः स्वाहा इदमग्नये न मम । ॐ नवो नवो भवति जाय-मानोह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः स्वाहा इदमग्नये न ममं ३ इति आहुतित्रयं हुत्वा । आयसादिवर्जितपात्रस्थं हवि-

रभिमन्त्रयेत्। तत्र मन्त्राः पूर्वोक्तास्त्रयः ॐआप्यायस्व० १। ॐसन्ते पया०२। ॐ नवो नवो ३ इत्यभिमन्त्र्य अथोदतिष्ठन् चन्द्राभिमुखः सन् कृताञ्जलिरुपस्थाय।तत्र मन्त्राः पूर्वोक्ता एव ॐ आप्यायस्व १ ॐ सन्ते पया०२ ॐ नवो नवो० ३ एतैरुपस्थाय। अथ प्रदीप्तेऽग्नौ आज्यहोमं कुर्यात्। तत्र मन्त्राः—ॐ यद्देवा देवहेडनं देवासश्चकृमा व्वयम्। अग्निर्मातस्मादेनसो व्विश्वान्मुञ्चन्त्वꣳहसः स्वाहा इदमग्नये न मम १। ॐ यदिदिवा यदि नक्तमेनाꣳसि चकृमा व्वयम्। व्वायुर्मा तस्मादेनसो विश्वान् मुञ्चन्त्वꣳहसः स्वाहा। इदमग्नये न मम २। ॐ यदि जाग्रद्यदि स्वप्न एनाꣳसि चकृमा व्वयम्। सूर्यो मा तस्मादेनसो विश्वान्मुञ्चन्त्वꣳहसः स्वाहा इदमग्नये न मम ३। ॐ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये यच्छूद्रे यदर्य्येषदेनश्चकृमा व्वयं यदेकस्याधिधर्म्मणि तस्यावयजनमसि स्वाहा इदमग्नये न मम ४ अत्र इदमग्नये न ममेति सर्वत्र त्यागः ( वैश्वदेववत्केवलं त्यागशब्दोच्चारणमेव न प्रोक्षण्यां, तस्याः स्थापनाभावात् )॥ अथ समिद्धोमः॥ ॐ देवकृतस्यैनसोऽव्वयजनमासि स्वाहा ॥ १ ॥ ॐ मनुष्यकृतस्यैनसोऽव्वयजनमासि स्वाहा ॥ २ ॥ ॐ पितृकृतस्यैनसोऽव्वयजनमसि स्वाहा ॥ ३ ॥ ॐ आत्मकृतस्यैनसोऽव्वयजनमासि स्वाहा ॥ ४ ॥ ॐ एनस एनसोऽव्वयजनमासि स्वाहा ॥ ५ ॥ ॐ यच्चाहमेतो व्विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽव्वयजनमसि स्वाहा ॥ ६ ॥ इति समिधो हुत्वा ॥ अथ ग्रासाभिमन्त्रणम् ॥ ॐ भूरित्यनेन पात्रस्थप्रथमग्रासमभिमन्त्र्य मनसा नमः स्वाहेत्युक्त्वा अङ्गुल्यग्रैर्ग्रासं गृहीत्वा सावित्र्याभिमन्त्र्य ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहेति पञ्चमन्त्रान्ते ग्रासं भक्षयेत्। आचम्य। एवं द्वितीय दिने ग्रासद्वयपक्षे ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा इति मन्त्रैः प्रथमम्। ॐ उदानाय स्वाहा ॐ समानाय स्वाहा इति द्वितीयम् ॥ तृतीयदिने ग्रासत्रयपक्षे ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा इतिप्रथमम्। ॐ व्यानाय स्वाहा ॐउदानाय स्वाहा। इति द्वितीयम्। ॐ समानाय स्वाहा इति तृतीयम्॥ चतुर्थेदिने ग्रासचतुष्टयपक्षे ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। इति प्रथमम्। ॐव्यानाय स्वाहा ॥ द्वितीयम्। ॐ उदानाय स्वाहा। तृतीयम्। ॐ समानाय स्वाहा। चतुर्थम्॥ पञ्चमदिने यथाक्रमम्। षष्ठदिने पञ्चभिरेकं पञ्चभिः पञ्च एवमग्रेऽपि पूर्ववत्। एवं द्वितीयादिदिनेषु। ॐ भूः १ ॐ भुवः २ ॐ स्वः ३ ॐ महः ४ ॐजनः ५ ॐ तपसे ६ ॐसत्याय ७ ॐ यशसे ८ ॐ श्रीऊर्के ९ ॐ ईटे १० ॐ ओजसे ११ ॐ तेजसे १२ ॐ पुरुषाय १३ ॐ धर्माय १४ ॐ शिवाय १५ इत्येतैः पञ्चदशभिरेकैकक्रमेण तिथिवृद्ध्या पात्रस्थग्रासमनुमन्त्र्य मनसा 'नमः स्वाहा' इत्युक्त्वा सर्वाननुमन्त्र्य एकैकं ग्रासमङ्गुल्यग्रैर्गृहीत्वा सावित्र्याऽनुमन्त्र्य

एकग्रासे प्राणादिपञ्चमन्त्रान्ते ग्रसेत्। द्वयोर्ग्रासयोराद्यैस्त्रिभिर्मन्त्रैरेकं द्वाभ्यामपरम्। त्रिषु ग्रासेषु द्वाभ्यां द्वाभ्यां द्वौ एकेनान्त्यः । चतुर्षु ग्रासेषु द्वाभ्यां पूर्वमेकेनान्यान् । पञ्चग्रासेषु पृथक् पञ्चभ्यः । पञ्चभ्योऽधिका ग्रासास्तूष्णीमेव भक्षणीयाः इति । आचमनानन्तरं प्रार्थयेत् । यस्य स्मृत्या च नामोक्त्या जपयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां यातु सद्यो वन्दे तमच्युतम् ॥ १ ॥ अनेन यवमध्यचान्द्रायणम् वा० पिपीलिकामध्यचान्द्रायणव्रतान्तर्गतप्रथमदिनकृत्येन भगवान् परमेश्वरः प्रीयतां न मम । समाप्तौ त्र्यवरान् विप्रान् भोजयित्वा गां दक्षिणां दद्यात् । आसमाप्ति प्रत्यहं त्रिषवणं स्नानम् । सौरमन्त्रैः कृताञ्जलिरादित्योपस्थानम् । गायत्र्या व्याहृतिभिः कूष्माण्डैर्वाऽऽज्यहोमः । दिवा स्थितिः रात्रावुपवेशनम् । अशक्तौ भूशयनम् । यथाशक्ति आपोहिष्ठेति सूक्तम् । एतोन्विन्द्रम् ऋतंचेति त्र्यृचम् । शन्न इन्द्राग्नी । स्वस्ति नो मिमीताम् । पुनन्तु मा देवजनाः । ऋषभं विरजं जपेत् । सामनी च पठेत् । एतेषामसम्भवे गायत्रीं व्याहृतीः प्रणवं वा जपेत् । विष्णुसहस्रनामगीतादीनि वा पठेत् । देवलस्मृतौ—"इदं चान्द्रायणं कृत्वा यवमध्यं सुपावनम् । ब्रह्महत्यादिभिः पापैर्मुक्तो भवति तत्क्षणात् ॥ विष्णुप्रियकरं चैतत्सर्वदुःखप्रणाशनम् । नारीणां विधवानां च यतीनां ब्रह्मचारिणाम् ॥ गृहस्थानां विशेषेण महापातकनाशनम् ॥" इति चान्द्रायणव्रतप्रयोगः ॥ अथ प्राजापत्यव्रतविधिमाह । हेमाद्रौ जाबालिः—"ब्रह्महत्यादिपापानामितरेषां मुनीश्वराः । तुलादिदानगन्तृणां पापानां साधनं नृणाम् ॥ प्रजापतिरिदं साक्षात् सृष्टवान् देवसन्निधौ । सर्वलोकोपकाराय सर्वपापापनुत्तये ॥ दिनत्रयं दिवा भुक्तिस्तथा रात्रौ दिनत्रयम् । अयाचितं स्यात्त्रिदिनं निराहारो दिनत्रयम् ॥ प्राजापत्यकृच्छ्रमिदं सर्वपापप्रणाशनम् । गोदानं पञ्चगव्यान्ते शुद्धिमाप्नोत्यनुत्तमाम् ॥ "अथैतदाचरणाशक्तानां प्रत्याम्नायाः । लिङ्गपुराणे—"प्राजापत्ये तु गौरेका द्वादशब्राह्मणार्च्चनम् । समुद्रगनदीस्नानं संहितामात्रमुच्यते ॥ प्राणायामाश्च द्विशतमयुतं जप उच्यते । तिलहोमः सहस्रं स्यात्प्रत्याम्नायास्तु सप्तधा ॥" इति । द्वादशब्राह्मणार्च्चनम्—द्वादशसंख्याकविप्रभोजनम् । संहितामात्रम्-संहिताया एकवारं पठनम् । अयुतम्—अयुतसंख्यापरिमितं गायत्रीजपम् । तिलहोमसहस्रम्—गायत्र्या सहस्रं तिलाहुतीर्जुहुयात् ॥ अथ पतितादीनां पुनरुपनयनविधानम् ॥ तत्र तावत् प्रायश्चित्तविधिर्लिख्यते । तत्रादौ पापानुसारेण चान्द्रायणादिव्रतम्, तदशक्तौ धेनुदानम्, अयुतादिगायत्रीजपम्, पादचारेण तीर्थयात्रादिद्वारा प्रायश्चित्तं संस्कार्येण पर्षदुपदिष्टं कारयेत् । तत आचार्यो देशकालौ स्मृत्वा अमुकनाम्नोऽस्य अमुकपापपरिहारार्थं पुनरुपनयनसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वस्योपनेतृत्वाधिकारसिद्ध्यर्थं च कृच्छ्रत्रयात्मकप्रायश्चित्तं तत्प्रत्याम्नायगोनिष्क्रयीभूतयथा-

शक्तिरजतद्रव्यदानपूर्वकं द्वादशसहस्रगायत्रीजपमहं स्वयं ब्राह्मणद्वारा वा कारयिष्ये । इति संकल्प्य तदैव जपं कुर्यात् । एवमेव संस्कार्योऽपि देशकालौ संकीर्त्य ममामुककामचाराऽमुककामवादाऽमुकाऽभक्ष्याभक्षणागम्यागमनामुक-म्लेच्छादिदेशगमनसमुद्रयात्राकरणादिदोषपरिहारार्थं मम पुनरुपनयनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृच्छ्रत्रयात्मक-प्रायश्चित्तप्रत्याम्नाय-गोनिष्क्रयभूत-रजतदानपूर्वकं त्रिगुणं द्वादशसहस्रं गायत्रीजपं ब्राह्मणद्वाराऽहमाचरिष्ये इति संकल्प्य । षट्त्रिंशत् सहस्रगायत्रीजपं कारयित्वा प्रायश्चित्तहोमं कुर्यात् । तद्यथा—हस्तमात्रं चतुरस्रं स्थण्डिलं कृत्वा कुशैः परिसमुह्य तानैशान्यां निक्षिप्य गोमयेनोपालिप्य स्रुवमूलेन प्रागग्रं प्रादेशमात्रं त्रिरुल्लिख्य अनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेणाग्निं प्रतिष्ठापयेत् । ततो ब्रह्मोपवेशनादि अग्निपर्युक्षणान्तं कुशकण्डिकां कृत्वा ब्रह्मणान्वारब्धः स्रुवेणाज्यहोमं कुर्यात् ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ १ ॥ ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम ॥ २ ॥ ( इत्याघारौ ) ॐ अग्नये स्वाहा इदमग्नये न मम ॥ ३ ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ ४ ॥ ( इत्याज्यभागौ ) ततोऽनन्वारब्धकर्तृकहोमः । आज्यप्लुतपलाशसमिधमादाय ॐ पुनस्त्वादित्या रुद्राव्वसवः समिन्धताम्पुनर्ब्रह्माणो व्वसुनीथयज्ञैः । घृतेनत्वन्तन्वंवर्धयस्वसत्याः सन्तु यजमानस्य कामाः स्वाहा ॥ १ ॥ ॐ पुनर्म्मनः पुनरायुर्मऽआगन् पुनः प्राणः पुनरात्मा मऽआगमन् पुनश्चक्षुः पुनः श्रोत्रम्मऽआगन् । वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातु दुरितादवद्यात्स्वाहा ॥२॥ ततश्चरुहोमः ॥ ॐ सप्त तेऽअग्नेसमिधः सप्त जिह्वाः सप्त ऋषयः सप्तधामाप्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्वाघृतेन स्वाहा ।१ । ॐ यत्ते पवित्रमर्च्चिष्यग्नेव्विततमन्तरा । ब्रह्मतेन पुनातु मा स्वाहा ॥ २ ॥ ॐ पवमानः सोऽअद्य नः पवित्रेण व्विचर्षणिः । यः पोता स पुनातु मा स्वाहा॥३॥ ॐ उभाभ्यान्देव सवितः पवित्रेण सवेन च । माम्पुनीहि व्विश्वतः स्वाहा ॥४॥ इति । ततोऽन्वारब्धः स्थालीपाकेन ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते ॥ १ ॥ तत आज्येन । ॐ भूः स्वाहा इदमग्नये ॥ १ ॥ ॐ भुवः स्वाहा इदं वायवे ॥२॥ ॐ स्वः स्वाहा इदं सूर्याय ॥ ३ ॥ ॐ त्वन्नोऽअग्ने व्वरुणस्य विद्वान् देवस्य हेडोऽअवयासि सीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो व्विश्वाद्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ ४ ॥ इदमग्नीवरुणाभ्यां न मम । ॐ सत्वन्नोऽअग्ने वमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्वनो वरुणꣳरराणो वीहिमृडीकꣳसुहवो नऽएधि स्वाहा ॥५॥ इदमग्नीवरुणाभ्यां न मम । ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजᳬस्वाहा ॥ ६ ॥ इदमग्नये अयसे न मम । ॐ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य

सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा॥७॥इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । ॐ उदुत्तमं वरुणपाशमस्मदवाधमं व्विमध्यमᳬश्रथाय । अथाव्वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥८॥ इदं वरुणायादित्यायादितये य न मम। ॐ प्रजापतये स्वाहा ॥९॥ इदम्प्रजापतये न मम । इति नवाहुतीर्हुत्वा । ततः पुष्पफलचन्दनघृतपूर्णस्रुवेण ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजातमग्निम् । कविᳬसम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा इदमग्नये । इति पूर्णाहुतिं दद्यात्। ततः ॐ त्र्यायुषं जमदग्नेरिति ललाटे । कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । यद्देवेषु त्र्यायुषमिति दक्षिणांसे । तन्नोऽअस्तुत्र्यायुषमिति हृदि । इत्यनामिकाग्रगृहीतभस्मना त्र्यायुषं कुर्यात् । ततः संस्रवप्राशनमाचमनं च कृत्वा ब्रह्मणे पूर्णपात्रदानं ब्रह्मग्रन्थिविमोकं च कुर्यात् । ततः प्रणीतोदकेन ॐ सुमित्रिया नऽआपऽओषधयः सन्तु इति मूर्धानमभिषिच्य ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । इतीशान्यां प्रणीतां न्युब्जीकृत्वा बर्हिरुत्थाप्य ॐ देवागातु० इति मन्त्रेण हस्तेनैव जुहुयात् । एवं होमशेषं समाप्य आचार्याय सवत्सां गां दद्यात् । अदाने प्रत्यवायी भवति तस्मादेन दद्यात् ॥ इति प्रायश्चित्तविधानम् ॥

---

## अथ पुनरुपनयनप्रयोगः ।

कृतमङ्गलस्नानो धृतकुंकुमादितिलकः कर्त्ता शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः संस्कार्यं चोपवेश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा अस्य संस्कार्यस्य अमुकदोषपरिहारपूर्वकं पुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमुपनयनसंस्कारं करिष्ये । इति संकल्प्य तदङ्गतया गणपतिपूजनं पुण्याहवाचनादिनान्दीश्राद्धान्तं कृत्वा अधिकारार्थं ब्राह्मणत्रयं संस्कार्यं च भोजयित्वा शिखावर्जं वपनं कारयित्वा तं स्नापयित्वा मेखलाजिनदण्डभैक्ष्यचर्याव्रतादिभिर्विना प्रयोगानुसारेण उपनयनं कुर्यात्। ब्रह्मचर्याभावात् । तथा च मनुपराशरौ—"अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च । निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ॥ " ततो बहिः शालायां हस्तमात्रपरिमितं चतुरस्रं स्थण्डिलं कृत्वा कुशत्रयेण परिसमुह्य तान् कुशानैशान्यां निःक्षिप्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेण अनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्यैशान्यां क्षिप्त्वा तं देशं जलेनाभिषिच्य नवीनकांस्यपात्रेणाग्निमानीय स्वाभिमुखं समुद्भवनामानमग्निं प्रतिष्ठापयेत् । तत आचार्यः संस्कार्यं पश्चादग्नेः स्वस्य दक्षिणतोऽवस्थाप्य ब्रह्मचर्यमागामिति ब्रूहीति संस्कार्यं प्रति वदति । ब्रह्मचर्यमागामिति संस्कार्यः प्रतिब्रूयात् । ब्रह्मचार्यसानीति ब्रूहीत्याचार्येणोक्ते ब्रह्मचार्यसानीति संस्कार्यो ब्रूयात् । तत आचार्यः ॐ येनेन्द्रा बृहस्पतिर्वासः पर्यदधादमृतं तेन त्वा

परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ॥ १ ॥ इति मन्त्रेण यथोक्तमधोवासः परिधापयति । तत आचमनं कृत्वा यज्ञोपवीतधारणाधिकारार्थं यज्ञोपवीतसहितं सदक्षिणं भाण्डाष्टकं ब्राह्मणेभ्यो दत्त्वा यज्ञोपवीतं परिदध्यात् । तत्रादौ आचार्यो यज्ञोपवीतमभिमन्त्रयेत् । तद्यथा आपोहिष्ठेति तिसृभिर्ऋग्भिरुपवीतं प्रक्षाल्य ॐ ब्रह्मजज्ञानम् ॥१॥ ॐ इदं विष्णुर्विचक्रमे० ॥ २॥ ॐ नमस्ते रुद्र० ॥ ३ ॥ इति तिसृभिर्ऋग्भिरुपवीते अङ्गुष्ठे भ्रामयेत् । पुनस्तथैव नवतन्तुषु देवताः विन्यसेत् । तद्यथा प्रथमतन्तौ ओङ्कारं न्यसामि ॥ १॥ द्वितीये० ॐ अग्निं न्यसामि ॥ २ ॥ तृतीये० ॐ नागान् न्यसामि ॥ ३ ॥ चतुर्थे० ॐ सोमम्०॥ ४ ॥ पञ्चमे० ॐ इन्द्रम्० ॥ ५॥ षष्ठे० ॐ प्रजापतिम्० ॥ ६ ॥ सप्तमे ॐ वायुम्० ॥ ७ ॥ अष्टमे० ॐ सूर्यम्० ॥ ८ ॥ नवमे० ॐ विश्वान् देवान् न्यसामि ॥ ९ ॥ इति नवतन्तुदेवताः न्यस्य गन्धादिभिः संपूज्य ॐ ऊपयाम गृहीतोऽसि सावित्रोऽसि च नो धाश्च नो धाऽअसि च नो मयि धेहि ॥ जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे ॥ १ ॥ इति मन्त्रेण सूर्याय प्रदर्शयेत् ॥ तत उपवीतं करसम्पुटे निधाय दशवारं गायत्र्याभिमन्त्रयेत् ॥ ॐ तत्सवितु०॥१०॥ ततो यज्ञोपवीतधारणम् । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ १ ॥ इति मन्त्रं पठितवतः संस्कार्यस्य दक्षिणबाहुमुद्धृत्य वामस्कन्धे यज्ञोपवीतं निवेशयति ॥ ततः आचमनम्॥तत आचार्यः स्वकीयमञ्जलिं जलेन पूरयित्वा तेन जलेनाञ्जलिस्थेन संस्कार्यस्याञ्जलिं पूरयति । ॐ आपो हि ष्ठा मयो भुवस्तानऽऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ १ ॥ ॐ यो वःशिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ २॥ ॐ तस्माऽअरङ्ग मामवो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३ ॥ इति तिसृभिर्ऋग्भिः सूर्यायार्घ्यं दद्यात् ॥ ततो गुरुः संस्कार्यं प्रेषयति सूर्यमुदीक्षस्वेति । माणवकश्च प्रेषितः । ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ १ ॥ इति मन्त्रेण सूर्यमुदीक्षते ॥ तत आचार्यो माणवकस्य दक्षिणांसस्योपरि स्वदक्षिणं हस्तं नीत्वा हृदयमालभते । ॐ मम व्रतं ते हृदये दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् । इति मन्त्रेण । तत आचार्यो माणवकस्य दक्षिणं हस्तं सांगुष्ठं गृहीत्वा को नामासीत्याह । एवं पृष्टः संस्कार्यः असुकशर्माहं भोः । एवं त्रिः प्रतिप्रत्याह । पुनराचार्यः पृच्छति । कस्य ब्रह्मचार्यसीति । भवत इति माणवकेनोच्यमाने ॐ इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासुकशर्मेत्याचार्यः पठेत् ॥ अथैनं संस्कार्यं भूतेभ्यः परिददात्याचार्यः तत्र मन्त्रः । ॐ प्रजापतये त्वा परिददामि । देवाय त्वा सवित्रे परिददामि ।

अद्भ्यस्त्वौषधीभ्यः परिददामि । द्यावापृथिवीभ्यां त्वा परि ददामि । विश्वेभ्यस्त्वा देवेभ्यः परिददामि । सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ॥ १ ॥ अथ संस्कार्यः अग्निं प्रदक्षिणीकृत्य आचार्यस्योत्तरतः उपविशति । आचार्यश्च ब्रह्मोपवेशनादि पर्युक्षणान्तं चरुवर्ज्यं कुशकण्डिकां कृत्वा पर्युक्षणानन्तरम् आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यान्तं स्विष्टकृच्चैताश्चतुर्दशाहुतीर्जुहुयात् । तद्यथा ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॐ इन्द्राय स्वाहा । इदं० ॥ २ ॥ ॐ अग्नये स्वाहा । इदमग्नये ॥ ३ ॥ ॐ सोमाय स्वाहा । इदं सोमाय० ॥ ४ ॥ ॐ भूः स्वाहा । इदमग्नये न मम ॥ ५ ॥ ॐ भुवः स्वाहा । इदं वायवे० ॥ ६ ॥ ॐ स्वः स्वाहा । इदं सूर्याय० ॥ ७ ॥ ॐ त्वन्नोऽअग्ने० स्मत्स्वाहा । इदमग्नीवरुणाभ्यां० ॥ ८ ॥ ॐ सत्वन्नोऽअग्ने० एधि स्वाहा इदमग्नीवरुणाभ्यां० ॥ ९॥ ॐ अयाश्चाग्ने० जर्ठ.स्वाहा । इदमग्नय अयसे० ॥१०॥ ॐ येते शतं वरुण ये सहस्रं० स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ११ ॥ ॐ उदुत्तमम्० स्याम स्वाहा । इदं वरुणायादित्यायादितये० ॥ १२ ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये०॥१३॥ ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० ॥ १४ ॥ ततः संस्रवप्राशनं पवित्राभ्यां मार्जनम् अग्नौ पवित्रप्रतिपत्तिः पूर्णपात्रवरयोरन्यतरस्य ब्रह्मणे दानम् । प्रणीताविमोकश्च । एवं होमं समाप्य अनन्तरम् एनं ब्रह्मचारिणं संशास्ति । कथम् ? ब्रह्मचार्यसीत्याचार्यो वदति । असानीति ब्रह्मचारी । अपोशानेत्याचार्यः । अश्नानीति ब्रह्मचारी । कर्म कुर्वित्याचार्यः । करवाणीति ब्रह्मचारी । मा दिवा सुषुप्स्व इत्याचार्यः । न स्वपानीति ब्रह्मचारी । वाचं यच्छेत्याचार्यः । यच्छानीति ब्रह्मचारी । समिधमाधेहीत्याचार्यः । आदधानीति ब्रह्मचारी । अपोशानेत्याचार्यः । अश्नानीति ब्रह्मचारी । अथास्मै एवं शासिताय ब्रह्मचारिणे आचार्यः सावित्रीमन्वाह । कीदृशाय ? उत्तरतोऽग्नेः प्रत्यङ्मुखोपविष्टाय पादोपसंग्रहपूर्वकमुपसन्नाय आचार्यं समीक्षमाणाय स्वयमप्याचार्येण समीक्षिताय । कथम् ? ओङ्कारव्याहृतिपूर्वकं प्रथमं पच्छः । एकैकपादम् । तथा द्वितीयमर्द्धर्चशः । तथैव तृतीयं सर्वां स्वयं च ब्रह्मचारिणा सह पठेत् ॥ तत्र मन्त्रः ॥ हरिः ओम् भूर्भुवः स्वः तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥१॥ अत्रावसरे ब्रह्मचारी समिदाधानं करोति । तत्रादौ आचार्यस्य दक्षिणदिशि अग्निपाश्चिमोपविष्टो घृताक्तशुष्कानिषिद्धेतरेन्धनं दक्षिणहस्तेन जुहुयात् । तत्र मन्त्राः । ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु ॥ १ ॥ ॐ तथा त्वमग्ने सुश्रवः सुश्रवा असि ॥ २ ॥ ॐ एवं मार्ठ सुश्रवः सुश्रवसं कुरु ॥ ३ ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ॥ ४ ॥ ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥ इत्येतैः पंचभिर्मन्त्रैः प्रतिमन्त्रमिन्धनप्रक्षेपः । ( शिष्टास्तु शुष्कगो-

मयखण्डैरेतत् कुर्वन्ति ) ततः प्रदक्षिणमग्निं पर्युक्ष्य उत्थाय स्वप्रादेशमितां घृताक्त-पलाशसमिधश्शमादाय तिष्ठन् ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधासमिध्यस एवमहमायुषा मेधयावर्च्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्म-वर्चस्व्यन्नादो भूयासᳬं स्वाहा ॥ १ ॥ इतिमन्त्रेण जुहुयात् ॥ ततोऽनेनैव मन्त्रेण समिदन्तरद्वयं जुहुयात् । तत उपविश्य पूर्ववत् । ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु॥१॥ ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि॥२॥ ॐ एवं माᳬं सुश्रवः सुश्रवसं कुरु ॥ ३ ॥ ॐ यथात्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ॥ ४ ॥ ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५॥ इति पञ्चभिर्मन्त्रैः प्रतिमन्त्रमिन्धनप्र-क्षेपः । ततस्तूष्णीं पाणी प्रतप्य वक्ष्यमाणैः सप्तभिर्मन्त्रैःप्रतिमन्त्रं मुखमवमृशति । ॐ तनूपाऽअग्नेसि तन्वम्मे पाहि ॥ १ ॥ ॐ आयुर्दाऽअग्नेऽस्यायुर्मे देहि ॥२॥ ॐ वर्च्चोदाऽअग्नेसि वर्च्चो मे देहि ॥ ३ ॥ ॐ अग्ने यन्मेऽऊनन्तन्मऽआपृण ॥ ४ ॥ ॐ मेधाम्मे देवः सविता आदधातु ॥ ५ ॥ ॐ मेधाम्मे देवी सरस्वती आद-धातु ॥ ६ ॥ ॐ मेधाम्मे अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ७ ॥ इत्येते मुख-मार्जनमन्त्राः । अथ शिष्टाचारपरिप्राप्ताः केचन पदार्था लिख्यन्ते । ॐ अङ्गानि च मऽआप्यायन्तामिति मन्त्रेण शिरःप्रभृति पादान्तं सर्वांगान्यालभते । दक्षिणह-स्ताग्रेण । ॐ वाक् च मऽआप्यायताम् । इति मुखालम्भनम् । ॐ प्राणश्च मऽ-आप्यायतामिति नासिकयोरालम्भनम् । ॐ चक्षुश्च मऽआप्यायतामिति चक्षुषी युगपत् । ॐ श्रोत्रं च मऽआप्यायतामिति दक्षिणश्रोत्रम् । अनेनैव मन्त्रेण वाम-श्रोत्रम् । ॐ यशो बलं च मआप्यायतामितिबाह्वोरुपस्पर्शनम् । ततस्त्र्यायुषकर-णम् । स्रुवेण भस्मानीय दक्षिणकरानामिकाग्रगृहीतभस्मना । ॐ त्र्यायुषं जमदग्ने-रितिललाटे । ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे । ॐ तन्नोऽअस्तु त्र्यायुषमिति हृदि । इति त्र्यायुषाणि कुरुते । अथ स्मृत्यन्तरोक्तमभिवादनं लिख्यते । व्यस्तपाणिभ्यां पृथिवीं स्पृशन् अमुक-गोत्रोऽमुकप्रवरोऽमुकशर्माहं भो वैश्वानर त्वामभिवादये इति त्रिः वैश्वानरमभिवाद्य पुनस्तेनैव क्रमेण । अमुकगोत्र० भो आचार्य त्वामभिवादये । इत्युक्त्वाभिवाद्य वृद्धानभिवादयेत् । आयुष्मान् भव सौम्य अमुकशर्मन्नित्याचार्यो ब्रूयात् । एवमेव सूर्यं वरुणं चाप्यभिवादयेत् । इत्यभिवादनम् । तथा च योगियाज्ञवल्क्यः– "दक्षिणं पादमालभ्य पाणिना दक्षिणेन तु।सव्येन सव्यं स्पृष्टव्यमभिवादनकर्मणि। व्यत्यस्थपाणिना कार्यमग्निं सूर्यं गुरुं तथा॥ "पुनरुपनयने भिक्षाचर्या न कार्या । तत आचार्यादीन् गन्धादिभिः संपूज्य तेभ्यो दक्षिणां दत्त्वा तैराशिषो गृहीत्वा स्थापितदेवताः विसृज्य प्रायश्चित्तानुसारेण ब्राह्मणान् भोजयेत् ॥

इति प्रायश्चित्तप्रकाशे पुनरुपनयनप्रयोगः समाप्तः ॥

अथ विस्तरतः सर्वप्रायश्चित्तप्रयोगो हेमाद्रौ प्रायश्चित्तखण्डे—कर्त्ता पूर्वेद्युः प्रातः सन्ध्यामुपास्य देवालये नदीतीरे स्वगृहे वा सभामुपवेश्य सचैलमलापकर्षणं स्नात्वा आर्द्रवासाः सभां गत्वा परिषदुपदिष्टसर्वप्रायश्चित्तं कर्तुकामो मदीयपापजातं निवेदयितुं शरीरशुद्ध्यर्थं मृत्तिकास्नानमहं करिष्य इति सङ्कल्प्य कल्पोक्तविधानेन मृत्तिकास्नानं कृत्वा द्विराचम्य पूर्वोक्तलक्षणोपेतपरिषत्सन्निधिं गत्वा गन्धकुसुमाक्षतादिभिः परिषदमभ्यर्च्य प्रायश्चित्तद्रव्यदशांशदक्षिणां कुसुमाक्षतांश्च गृहीत्वा समस्तसम्पदादिमन्त्रैस्त्रिवारं प्रदक्षिणीकृत्य दक्षिणां पुरतो निधाय प्रणम्योत्थाय च प्राञ्जलिर्विज्ञापयेत्। नमः सकलकल्याणदायिने ब्रह्मरूपिणे। सदसे सर्वपूज्याय दुष्कृतारण्यवह्नये॥ हे परिषत् काश्यपगोत्रेण नक्षत्रे राशौ च जातेन असुकनामधेयेन मया समर्पितामिमां परिषद्दक्षिणां स्वीकृत्य मदीयां विज्ञापनामवधार्य मामनुगृहाण इति पुनः प्रणमेत्। तत उत्थाय काश्यपगोत्रः नक्षत्रे राशौ जातः असुकनामधेयोऽहं परिषदुपदिष्टसर्वप्रायश्चित्तं कर्त्तुकामो मदीयपापजातं परिषत्सन्निधौ निवेदयिष्य इति सङ्कल्प्य एवं निवेदयेत्। गोत्रादियुक्तेन मया जन्मप्रभृत्येतत्क्षणपर्यन्तं मध्यवर्त्तिनि काले बाल्यकौमारयौवनवार्द्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः कामक्रोधलोभमोहमात्सर्यैस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थैः कृतानां प्रकाशकृतमहापातकचतुष्टयतद्व्यतिरिक्ततत्संसर्गादिपातकानां रहस्यकृतब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पगाख्यानां महापातकानां तत्संसर्गित्वानुग्राहकत्वप्रयोजकत्वामित्रभावोपदेष्टृत्वमन्त्रित्वप्रोत्साहकत्वादिमहापातक—प्रतिदिष्टादिपातकानां गुर्व्वधिक्षेपवेदनिन्दासुहृद्वधाधीतनाशनादिब्रह्महत्यासमपातकानाम् अश्वरत्नमनुष्यहरणनिक्षेपहरणदेवब्रह्मस्वभूधेनुहरणादिसुवर्णस्तेयसमरूपपातकानां पितृष्वसृमातृष्वसृमातुलभार्याज्येष्ठभ्रातृपत्नी—हीनवर्णमातृसपत्नीसखिभार्याकुमार्ययोन्यन्त्यजासगोत्रासूतस्त्रीसामान्यनृपतिपत्नीरमणादिगुरुतल्पसमपातकानां गोवधव्रात्यत्वसामान्यस्तेयापात्रीकरणानाहिताग्नित्वापण्यविक्रयपरकातितृष्णादिपातकानां सोमयागस्थक्षत्रियवैश्यवधाविज्ञातगर्भरजस्वलात्रिगोत्रदीक्षितस्त्रीगुर्विणीवधादिमहापातकसमपातकानाम् उत्कर्षानृतभाषणकलञ्जादिनिषिद्धभक्षणरजस्वलादिमुखास्वादकूटसाक्ष्यसुहृद्बन्धनादिपरिवेदनभृतकाध्यापनपारदार्यपारिवित्त्यवार्धुष्यलवणविक्रयस्त्रीशूद्रविट्क्षत्रियवधानिन्दितार्थोपजीवननास्तिक्यव्रतलोपकरणसुताविक्रयधान्यपुष्पपशुस्तेयायाज्ययाजनपितृमातृसुतादित्यागतटाकारामविक्रयकन्याविक्रयकन्यादूषणपरिविन्नकन्यादानकौटिल्यव्रतलोपात्मार्थक्रियारम्भमद्यपस्त्रीनिषेवणोपाध्यायाग्निपरित्यागेन्धनार्थद्रुमच्छेदनस्त्रीहिंसनयन्त्रविधानव्यसनात्माविक्रयशूद्रद्रव्यहीनसख्यहीनयोनिनिषेवणानाश्रमवासपरान्नपरिपुष्टत्वासच्छास्त्राभिगमनाकराधिकारिताभार्या

विक्रयाद्युपपातकानाम् अजाऽविखरोष्ट्रमृगेभमीनाहिमाहिषाश्ववधादिसंकलीकरणानां कृमिकीटवयोवधमद्यानुगतद्रव्यभोजनफलेक्षुकुसुमस्तेयादिमलिनीकरणानां निन्दितधनधान्यकरीषजीवनासत्यभाषणशूद्रसेवाद्यपात्रीकरणानां मद्यगन्धघ्राणब्राह्मणपीडनसामान्यस्त्रीपुंमैथुनादिजातिभ्रंशकराणां विहितकर्मत्यागनिषिद्धाचरणेन्द्रियानिग्रहपरममौंढ्याटनसूचकत्वाशौचस्नानसन्ध्यावन्दनजपहोमपञ्चमहायज्ञरहितभोजनाकालभोजनदिवाद्विवारभोजनसस्यच्छेदनतरुगुल्मलतादिच्छेदनक्लैब्यस्त्रीवश्यश्वपतित-क्लीवव्रात्यपरिविन्नशूद्रसेवक-वार्धुषिकानिजकर्मादिहीनान्नभोजन-यत्यन्नभोजनपतितप्रेरितान्नयतिपक्वान्नयतिपात्रस्थान्नयतिस्पृष्टयतिदापितान्नभोजनशूद्रस्पृष्टशूद्रदृष्टशूद्रानुमतशूद्राधिकृतशूद्रयाचितान्नभोजन-ग्रहणकालभोजनग्रहणकालपक्वान्नभोजनपर्व्वकालरात्रिभोजनैकादश्यहोरात्रभोजना-निर्वेदितान्नभोजन-हस्तदत्तान्नभोजनप्रेतपिशाचोद्देशभोजन-वटाश्वत्थादिनिषिद्धपत्रभोजन-बलिदत्तान्नभोजननीराजितान्नभोजन-ग्रामयाजकवृषलीपतिमाहिषिकाशिवाद्विजशाक्तकाषायपाशुपताचिह्निताङ्गचिकित्सकाशौचिक-ज्यौतिषिकान्नभोजन-भिन्नकांस्यपात्रभोजनताम्रालाबुदारुपात्रमृत्पात्रभोजन-रजस्वलान्न-चाण्डालादिवाक्यश्रवणभोजनदग्धपर्युषितपूतिगन्धभुक्तोच्छिष्टान्नभोजन-गणान्न-दीक्षितान्न-शूद्रपुरोहितान्न-पर्यायान्नभोजनशूद्रपात्रस्थान्नभोजन-महापुरुषार्च्चितान्नभोजन-शूद्रभुक्तशेषान्न-भोजन-ग्रामान्त्यजदत्तशेषान्नभोजनभिक्षान्नभोजनदम्पतिभुक्तशेषान्नभोजनबौद्धशाक्यब्राह्मणान्नभोजन-कारागृहवासभोजनखरोष्ट्राजाविकमहिषीक्षीरादिपानाविवत्साविगतगर्भानिर्दशगोपयःपानस्तन्यपानापिण्याककृसरसंयावपायसापूपमांसपुरोडाशादिवृथाभक्षण-वामहस्तैकहस्तवर्षधारारूप-जलपान-रेतोविण्मूत्रकीटास्थिमिश्रितजलपान-तन्मिश्रितान्नभोजन-वार्त्ताक-कालिङ्गगृञ्जनरक्तमूलक-वर्त्तुलालाबुश्वेतवृन्ताकादिनिषिद्धद्रव्यभक्षणनिषिद्धशिवनिर्माल्यादिभक्षणोपपातकिपक्वतण्डुलान्नभोजनयोनिप्रेक्षण-योन्यास्वादनदिवास्वापनदिवासङ्गमदासीवेश्याकुलटाविततन्तुपरावरुद्धप्रसवोन्मुखस्त्रीगमनसाधारणीभूतस्त्रीपरस्त्रीगमनातिर्यग्योनिगमनमुखमैथुनवल्मीकराजमार्गच्छायावृक्षदेवालयगृहाङ्गनगोष्ठवृन्दावनजलाशयादिस्थलरेतोविण्मूत्रकरणजलमध्यष्ठीवनदूषणपितृमात्राचार्यादिशुश्रूषाराहित्यदर्शमहालयसंक्रान्तिव्यतीपाताष्टकालभ्ययोगत्यागश्राद्धविस्मरणग्रहणादिपुण्यकालस्नानदानराहित्य-सन्ध्यात्रयवस्त्रपरिवर्त्तनोपासनादिराहित्यसन्ध्याकालसंलापताम्बूलचर्व्वणभोजनमैथुननिद्रादिपारवश्य-पुण्यकालोष्णोदकस्नाननग्नस्नानपैतृकादिश्राद्धनिषिद्धदिनाभ्यङ्गस्नानसन्निहिततीर्थोल्लङ्घनतीर्थस्नानकच्छराहित्यकौपीनधारणकच्छपुच्छकातिर्यक्कटिसूत्रकच्छादिधारणस्वग्रामदेवोत्सवादर्शनतदुत्सवजनपदग्रामकुलाचारोल्लङ्घनगुर्वाचार्यविप्रश्रोत्रियाहिताग्निनृपकार्योल्लङ्घनाविप्रत्वङ्कारहुङ्कारतिरस्कारवादपराजयप्रापणासहायारण्यमार्गगम-

नब्राह्मणदण्डन शोणितस्रावणमलिनामेध्याविलकषाय-नीलादिवस्त्रधारणहरिहरगुर्वाचार्यनिन्दाश्रवणब्राह्मणदूषणक्षोभकरणसंहतिपरित्यागक्षत्रियादिवृत्तिद्रव्यान्नगोविप्ररोधनस्वयंधृतहलकर्षणकृषिजीवनकौश्वजीवनपीतावशिष्टोदकपानचाण्डालकारितकृषिधान्य-शालादुग्धपुष्पफलभोगचाण्डालकारितवापीकूपतटाकोदकपानान्यकारितप्रपाजलपानकरमथिततक्रपान-दीपोच्छिष्टाभ्यङ्गावशिष्टतैलपानसाभिलाषपरदारनिरीक्षणविवस्त्रस्त्रीनिरीक्षणमिथुनीभूतस्त्रीनिरीक्षणगुर्वाचार्यनृपादिमैथुनादिदर्शनशब्दश्रवणमैथुनविघ्नाचरणहीनवर्णाभिवादनराजासनाक्रमणराजत्वङ्कारहुंकाररन्ध्रान्वेषणमर्मोद्घाटनासाधूपदेशन्यायाप्रवर्त्तकरणचार्वाकपाषण्डादिपूजितदेवताभिवादनपरोपतापकरण-परोपकारनाशन-तृणगुल्मलतादिनाशन-गोमांसगन्धघ्राणचाण्डालस्पर्शनदर्शनभाषणपाकभेदपंक्तिभेदकरणतुरुष्कादिम्लेच्छमध्यनिवासम्लेच्छद्रव्योपभोग-याचमानदीनान्धकृपणावेक्षण-मुष्टिमात्रातिलसाहितैरकादिनानाप्रकारदुष्प्रतिग्रहनियमराहितवेदपुराणशास्त्राध्ययनाध्यापनव्यवहारपक्षपातसाधारणब्राह्मणसीमाकुल्यातटाककूपारामाद्यपहरणपशुपक्षिबन्धनशीतवातातपवर्षचौराद्यापद्गतदुःखा-निवारणानहासनशयनप्रदान-विषमभाषण-वाक्पारुष्यदण्डपारुष्याविहितकालाविहिताचरणमित्रस्वामिसुहृदाचार्येष्टभार्यादेवतावञ्चनपरमात्मस्मरणराहित्यादीनां प्रकीर्णकानामज्ञानतः सकृत्कृतानां ज्ञानतोऽभ्यस्तानां ज्ञानतः सकृत्कृतानामत्यन्तचिरकालनिरन्तराभ्यस्तानां प्रकाशकृन्महापातकव्यतिरिक्तानां रहस्यकृतमहापातकादीनां प्रकीर्णकान्तानां नवविधानां बहुविधानां च सर्वेषां पापानामपनोदकं प्रायश्चित्तं प्रतिनिमित्तं कर्त्तुमक्षमस्यामुकगोत्रस्यामुकनामधेयस्य मम सकलपापापनोदकमेकविधं सर्वप्रायश्चित्तं धर्मशास्त्रपर्यालोचनया निश्चित्यादिश्यामुकगोत्रजममुकनामधेयं मां सर्वस्मादेनसः समुद्धर इति त्रिवारं प्रणमेत्। ततः परिषदपि यजमानविज्ञापनमाकर्ण्य तत् समर्पितां परिषद्दक्षिणां स्वीकृत्य धर्मशास्त्राणि पर्यालोच्यैकविधं सर्वप्रायश्चित्तं निश्चित्य अस्मिन् सर्वप्रायश्चित्ते परिषदनुज्ञया भवद्भिर्विधायकैर्भवितव्यमिति दक्षिणादानपूर्वकं यजमानेन विधायकान् वरयित्वा विधायकान् प्रत्येवं वदेत्। परिषद्वाक्यप्रकारः। भो भो विधायकाः अमुकनामधेयेनास्मत्सन्निधौ विज्ञापितानां नवविधानां पापानां धर्मशास्त्रपर्यालोचनया षडब्दप्राजापत्यकृच्छ्रात्मकं सर्वपापप्रायश्चित्तमपनोदकं भवति। एतदेव पापानां मत्या करणे द्विगुणम्। अत्यन्ताभ्यासे त्रिगुणम्। निरन्तराभ्यासे षड्गुणम्। तदेव षड्गुणितषडब्दम्। अशीत्यधिकसहस्रसंख्याकं प्राजापत्यकृच्छ्रात्मकं सर्वप्रायश्चित्तमस्मन्निर्णीतं सर्वपापापनोदकं भवतीति भवन्तो विधायका अनुवादकमुखेन यजमानायोपदिशन्तु। ततोऽभिधायका यजमानसमर्पितां दक्षिणां स्वीकृत्य विविधप्रायश्चित्तपापानुवादकुशलमेकं

विपश्चितमनुवादकं दक्षिणादानपूर्वकमस्मिन् प्रायश्चित्ते भवतानुवादकेन भवितव्यमिति यजमानेन वरयित्वा अनुवादकमेवं ब्रूयुः । विधायकवाक्यम् । अहो विद्वन् विदुषामग्रेसरः प्रायश्चित्तापनोद्यस्य बहुविधस्य पापस्यानुवादकुशल हे अनुवादक अमुकगोत्रेण अमुकनामधेयेन यजमानेन परिषत्सान्निधौ विज्ञापितानां प्रकाशकृतमहापातकानां व्यतिरिक्तानां च तत्संसर्गाद्यतिपातकानां रहस्यकृत महापातकादि-प्रकीर्णकान्तानां नवविधानामज्ञानतः कृतानां ज्ञानतः सकृत् कृतानामत्यन्तनिरन्तराचिरकालाभ्यासवशात् षड्गुणितं षडब्दं प्रायश्चित्तमशीत्यधिकसहस्रसंख्याकप्राजापत्यकृच्छ्रात्मकसर्वप्रायश्चित्तं सर्वेषां पापानामपनोदकं भवतीति अशेषविद्वत्सभया निर्णीतमस्यां निर्णीतं सर्वप्रायश्चित्तमनुवादमुखेन यजमानायोपदिशन्तु इति परिषदस्मानाज्ञापयते वयमपि अमुकगोत्रेण अमुकनामधेयेन यजमानेन परिषत्सन्निधौ विज्ञापितानां प्रकाशकृतमहापातकव्यतिरिक्तानां तत्संसर्गातिपातकानां रहस्यकृतब्रह्महत्यादिपातकानां तद्रूपोपदिष्टव्रतातिदिष्टातिपातकानां संकरीकरणानां मलिनीकरणानां प्रकीर्णकादिनवविधानामज्ञानतः सकृत्कृतानाम् एकगुणम् । ज्ञानतः सकृत्कृतानां द्विगुणम् । ज्ञानतोऽभ्यस्तानां त्रिगुणितम् । अत्यन्ताभ्यस्तानां चतुर्गुणम् । निरन्तराभ्यस्तानां पञ्चगुणम् चिरकालाभ्यस्तानां षड्गुणम । अशीत्यधिकसहस्रसंख्याकप्राजापत्यकृच्छ्रात्मकं षड्गुणितं षडब्दं सर्वप्रायश्चित्तं सर्वेषां पातकानामपनोदकं भवतीति विज्ञाय अमुकगोत्राय अमुकनामधेयाय अस्मै यजमानाय भवन्मुखेन विज्ञापयामः । तदेतदस्मद्विहितं सर्वप्रायश्चितं पापानुवादपुरःसरमुपदिश अस्मै यजमानाय इति त्वां नियोजयामः। त्वमपि उच्चैरूर्ध्वबाहुः सुविस्पष्टं गीर्वाणभाषया यजमानाय त्रिवारम् अनुवद । अनुवादकोऽपि यजमानसमर्पितदक्षिणां स्वीकृत्य द्विराचम्य प्राणानायम्य उत्थाय यजमानाभिमुखं स्पष्टमूर्ध्वबाहुर्देवभाषया परिषन्निर्णीतविधायकविहितं सर्वप्रायश्चित्तोपदेशपूर्वकमुच्चैस्त्रिवारमनुवदेत् । ब्राह्मणानां ब्राह्मणस्त्रीणां प्रायश्चित्ते तु यजमानस्य पुरस्तात् कश्चन ब्राह्मणं स्थापयित्वा तं प्रत्यनुवदेत् ॥

अथानुवादकवचनरचनाप्रकारः ॥ भो यजमान अमुकगोत्र नक्षत्रे राशौ जात अमुकनामधेय अशेषा विदुषां परिषत् त्वया विज्ञापितानां प्रकाशिकृतमहापातकव्यतिरिक्तानां तत्संसर्गाद्यतिपातकानां रहस्यकृतमहापातकानाम् अतिपातकानाम् उपपातकानां सङ्करीकरणानां मलिनीकरणानाम् अपात्रीकरणानां जातिभ्रंशकरणानां प्रकीर्णकानां बहूनां नवविधानाम् अपनोदकानि प्रायश्चित्तानि प्रतिनिमित्तं कर्तुम् अक्षमस्य तव सर्वपापापनोदकमेकविधं प्रायश्चित्तं षड्गुणितषडब्दप्राजापत्यकृच्छ्रात्मकं धर्मशास्त्रपर्यालोचनया निश्चित्य यजमानाय पापानुवादपुरःसरं त्रिवारम् उपदिश इति विधायकमुखेन मामादिष्टवती अहमपि तदेतत्

परिषन्निर्णीतविधायकविहितं सर्वप्रायश्चित्तं तवोपदिशामि। सावधानः समाकर्णय। भो यजमान अमुकगोत्रे नक्षत्रे राशौ जात अमुकनामधेय तव जन्मप्रभृत्येतत्क्षणपर्यन्तं मध्यवर्तिनि काले बाल्य-कौमार-यौवन-वार्द्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः काम-क्रोध-लोभ-मोह-मद-मात्सर्यैस्त्वक्चक्षुः-श्रोत्र-जिह्वा-घ्राण-वाक्-पाणि-पाद-पायूपस्थैः ज्ञानतोऽज्ञानतश्च सम्भावितानां प्रकाकृतमहापातकव्यतिरिक्तानां तत्संसर्गतद्रूपातिदिष्टरूपातिपातकानां रहस्यकृतब्रह्महत्यादिमहापातकानां महापातकरूपातिदेशिकमहाव्रतातिदेशिकातिपातकसमरूपपातकानाम् उपपातकानां मलिनीकरणनाम् अपात्रीकरणानां जातिभ्रंशकराणाम् प्रकीर्णकानामज्ञानतः सकृत्कृतानाम् अज्ञानतः ज्ञानतश्चाभ्यस्तानामत्यन्ताभ्यस्तानां निरन्तराभ्यस्तानां चिरकालाभ्यस्तानां बहूनां बहुविधानां सर्वेषां पापानां साशीतिसहस्रसंख्याक-प्राजापत्यकृच्छ्रात्मक-षड्गुणित-षडब्दरूपं प्रायश्चित्तमपनोदकं भवति तदेतदशेषपरिषन्निर्णीतं साङ्गोपाङ्गं त्वया अनुष्ठेयम्। त्वं साक्षाच्चर्यायाम् असमर्थश्चेत् विहिततत्संख्याकधेनुदानतन्मूल्यदानायुतगायत्रीजपप्राणायामशतद्वयतिलहोमसहस्रसंहितामात्रवेदपारायणद्वादशब्राह्मणभोजनविधिवदनुष्ठितसमुद्रगनदीस्नानादिप्राजापत्यकृच्छ्रप्रत्याम्नायरूपेणाचर। शुद्धः पूतो भविष्यसि। अमुके गोत्रे नक्षत्रे राशौ जातेन अमुकनामधेयेन त्वया परिषन्निर्णीते साङ्गोपाङ्गे सर्वप्रायश्चित्ते शक्यप्रत्याम्नायरूपेण सम्यगनुष्ठिते सति त्वया परिषत्सान्निधौ विज्ञापितेभ्यः प्रारब्धत्वत्कृतपातकव्यतिरिक्तेभ्यः तत्संसर्ग-तद्रूपातिदिष्टव्रतादिष्टादिपातकेभ्यः तत्समरूपपातकेभ्यः रहस्यकृतब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पगमनाख्यमहापातकेभ्यः तत्संसर्गित्वानुग्राहकत्वप्रयोजकत्व-मैत्रीभावोपदेष्टृत्वानुमन्त्रित्वप्रोत्साहकत्वादिमहापातकरूपातिदेशकातिपातकेभ्यः सोमयागस्थक्षत्रियवैश्यवधाविज्ञातगर्भतुमत्यत्रिगोत्रादिदीक्षितस्त्रीवधादिमहापातकव्रतातिदेशिकपातकेभ्यः गुर्वधिक्षेपवेदनिन्दासुहृद्वधाधीतनाशनादिब्रह्महत्यासमपातकेभ्यः उत्कर्षानृतभाषणाभक्ष्यभक्षणपुष्पवतीमुखास्वादादिसुरापानसमपातकेभ्योऽश्वरत्नस्त्रीधेनुनिक्षेपब्राह्मणभूमिहिरण्यादिसुवर्णस्तेयसमपातकेभ्यः सखिभार्याकुमारी-जातिस्त्र्यन्त्यजस्त्रीस्नुषापितृव्यपत्नीमातुलपत्नीनृपपत्नीपितृष्वसृमातृष्वसृमातृसपत्नीभगिनीश्रोत्रियर्त्विगुपाध्यायाचार्यमित्रपत्नीदुहितृरजस्वलाशरणागताप्रव्रजितानिक्षिप्तस्त्रीगमनादिगुरुतल्पसमपातकेभ्यः गोवधव्रात्यत्वसामान्यद्रव्यस्तेयर्णानपाकरणानाहिताग्नित्वापण्यविक्रय-परिवेदनभृतकाध्ययनभृतकाध्यापनपारदार्यपारिवित्त्यवार्द्धुष्यलवणविक्रय-स्त्रीशूद्रविट्क्षत्रियवधनिन्दितार्थोपजीवननास्तिक्यव्रतत्यागसुताविक्रयधान्यकुप्य-पशुस्तेया-याज्ययाजन-पितृमातृ-सुतत्याग-तडाकारामादीविक्रय-कन्यादूषणपारिविन्दक-कन्याप्रदानकौटिल्यव्रतलोपनान्यार्थक्रियारम्भमद्यपस्त्रीनिषेवणस्वा

ध्यायाग्निपरित्यागवान्धवत्यागेन्धनार्थद्रुमच्छेदनस्त्रीहिंसौषधजीवनहिंसायन्त्रवि-
धानव्यसनात्मविक्रयशूद्रप्रेष्यत्वहीनसख्यहीनयोनिनिषेवणानाश्रमवासपरान्नपरिपु-
ष्टतासच्छास्त्राधिगमनाकराधिकारित्वभार्याविक्रयाद्युपपातकेभ्यः खरोष्ट्रमृगेभाजा-
विकाश्वमीनाहिमहिषवधादिसङ्कलीकरणेभ्यः कृमिकीटवयोवधमद्यानुगतद्रव्यभो-
जनफलेक्षुकुसुमस्तेयादिमलिनीकरणेभ्यः निन्दितधनादानवाणिज्यकुसीदजीवना-
सत्यभाषणशूद्रसेवाद्यपात्रीकरणेभ्यः ब्राह्मणपीडाकरणमद्याघ्राणजैह्म्यपुंमैथुनादि-
जातिभ्रंशकरेभ्यः विहितकर्मत्यागनिषिद्धाचरणेन्द्रियानिग्रहपरमर्मभेदनसूचकत्व-
शौचसन्ध्यावन्दनजपहोमपञ्चमहायज्ञराहित्यकालाभोजनाकालभोजनादिवाद्विवा-
रभोजनसस्यच्छेदनतरुगुल्मलताच्छेदनक्लैब्यस्त्रीवश्यत्वपतितक्लीबव्रात्यपरिविन्द-
कपरिवित्तिशूद्रसेवकवार्द्धुषिकनिजकर्महीनान्नभोजनयत्यन्नयतिप्रेरितान्नयतिपात्र-
स्थान्नयतिपक्वान्नयतिस्पृष्टयतिदापितान्नभोजनशूद्रस्पृष्टशूद्रवीक्षितशूद्रानुमतशूद्रा-
धिकृतशूद्रयाचितान्नभोजनग्रहणकालपक्वान्नभोजनपर्वकालरात्रिभोजनैकादश्यहो-
रात्रभोनानिवेदितान्नभोजनहस्तदत्तान्नभोजनप्रेतपिशाचोद्देशभोजनवटाश्वत्थादि-
निषिद्धपत्रभोजनवलिदत्तान्नभोजननीराजितान्नभोजनग्रामयाजकगणकवृषलीपति-
माषिहिकाशिवद्विजशाक्तपाषाण्डपाशुपतचिह्नितागचिकित्सकसौचिकज्यौतिषिका-
न्नभोजनभिन्नकांस्यपात्रभोजनताम्रालाबुदारुपात्रभोजनरजस्वलाचाण्डालादिवा-
क्यश्रवणदग्धान्नभोजनपर्युषितपूतिगन्धभुक्तोच्छिष्टान्नभोजनगणान्नदीक्षितान्नशूद्र-
पुरोहितान्नपर्यायान्नभोजनशूद्रपात्रस्थान्नभोजनमहापुरुषार्चितान्नाभोजनशूद्रभुक्त-
शेषान्नभोजनग्रामान्त्यजदत्तशेषान्नभोजनभिक्षान्नभोजनदम्पतीभुक्तान्नशेषभोजन-
बौद्धमखब्राह्मणान्नभोजनकारागृहवासभोजनखरोष्ट्राजाविकमाहिषीक्षीरादिपानावि-
वत्साविगतगर्भनिर्दशगोपयःपानस्तन्यपानपिण्याककृतरससंयावपायसापूपमांसपु-
रोडाशादिवृथाभक्षणवामहस्तैकहस्तवर्षधारापरदत्तधारारूपजलपानरेतोविण्मूत्र-
कीटास्थिमिश्रितजलपानतादृङ्मिश्रितान्नभोजनवार्ताककतककालिङ्गगृञ्जनरक्तमू-
लकवर्तुलालाबुश्वेतवृन्ताकादिनिषिद्धद्रव्यभक्षणनिषिद्धशिवनिर्माल्यभक्षणोपपात-
कीपक्वतण्डुलान्नभोजनयोनिवीक्षणयोन्यास्वादनदिवास्वापदिवासंगमदासीवेश्या-
कुलटावितन्तुपरावरुद्धप्रसूतोन्मुखस्त्रीगमनसाधारणीभूतपरस्त्रीगमनतिर्यग्योनिग-
मनमुखमैथुनरथ्याराजमार्गच्छायावृक्षदेवालयगृहाङ्गणगोष्ठवृन्दावनजलाशयादिरे-
तोविण्मूत्रकरणजलमध्यनिष्ठीवनदूषणपितृमात्राचार्यादिशुश्रूषाराहित्यदर्शमहालय-
संक्रान्तिव्यतीपाताष्टकालभ्ययोगश्राद्धविस्मरणग्रहणादिपुण्यकालस्नानदानादिरा-
हित्यसन्ध्यात्रयवस्त्रपरिवर्त्तनोपासनादिराहित्यसन्ध्याकालसँलापताम्बूलचर्वणभो-
जनमैथुननिद्रादिपारवश्यपुण्यकालोष्णोदकस्नाननग्नस्नानपैतृकादिनिषिद्धदिनाभ्य-
ङ्गस्नानसान्निहिततीर्थोल्लङ्घनतीर्थस्नानकच्छराहित्यकौपीनधारणद्विकच्छत्वपुच्छक-

च्छत्वतिर्यक्कटिसूत्रकच्छादिधारणस्वग्रामदेवोत्सवादर्शनतदुत्सववर्जनपुरग्रामकुला-
चारोल्लङ्घनगुर्वाचार्यविप्रश्रोत्रियाहिताग्निनृपच्छायोल्लङ्घनविप्रत्वङ्कारहुङ्कारातिरस्का-
रवादपराजयप्रापणासहायारण्यमार्गगमनब्राह्मणेतरदण्डनभर्त्सनताडनशोणितस्रा-
वणमलिनामेध्यानिलकषायविदशादिवस्त्रधारणहरिहरगुर्वाचार्यादिनिन्दाश्रवणब्रा-
ह्मणदूषणक्षोभकरणस्ववृत्तिपरित्यागक्षत्रियादिवृत्तिद्रव्यार्जनगोतिरोधानस्वयंधृतह-
लकर्षणकृषिजीवनकौश्वजीवनपीतावशिष्टोदकपानचाण्डालकारितकृषिधान्यशाल-
दुग्धपुष्पफलोपभोगचाण्डालकारितवापीकूपतटाकोदकपानान्यकारितप्रपाजलपा-
नकरमथिततक्रपानदीपोच्छिष्टाभ्यङ्गावशिष्टरात्रितैलजलपानसाभिलाषपरदारनि-
रीक्षणनग्नस्त्रीनिरीक्षणमिथुनीभूतस्त्रीनिरीक्षणगुर्वाचार्यनृपादिमैथुनदर्शनशब्दश्रवण-
मैथुनाविघ्नाचरणहीनवर्णाभिवादनराजासनाक्रमणराजत्वङ्कारहुङ्काररन्ध्रान्वेषणदूष-
णमर्मोद्घाटनासाधूपदेशान्यायप्रवर्त्तनकरणचार्वाकपाषण्डादिपूजितदेवताभिवादन-
परोपतापकरणपरोपकारनाशनतृणगुल्मलतादिनाशनगोमांसगन्धाघ्राणचाण्डाल-
स्पर्शनदर्शनसम्भाषणपाकपभेदपंक्तिभेदकरणतुरुष्कादिम्लेच्छालयनिवासम्लेच्छद्र-
व्योपभोगयाचमानदीनान्धकृपणोपेक्षणमुष्टिमात्रतिलसहितैरकादिनानाप्रकारदुष्प्र-
तिग्रहनियमरहितवेदशास्त्राध्ययनाध्यापनव्यवहारपक्षपातसाधारणब्राह्मणसीमाकु-
ल्यातटाककूपारामाद्यहरणपशुपक्षिबन्धनशीतवातातपवर्षचौरव्याध्याद्यापद्गतगवा-
दिदुःखानिवारणानर्हासनशयनप्रदानविषमभाषणवाक्पारुष्याकालविहिताचरणमि-
त्रस्वामिसुहृदाचार्येष्टभार्यादेवतावञ्चनपरमात्मस्मरणराहित्यादिप्रकीर्णकेभ्यः अज्ञा-
नतः सकृत् कृतेभ्यः ज्ञानतः सकृत् कृतेभ्यः ज्ञानतोऽज्ञानतश्चाभ्यस्तेभ्यः निर-
न्तराभ्यस्तेभ्यः चिरकालाभ्यस्तेभ्यः नवविधेभ्यः बहुभ्यः पापेभ्यः काश्यपगो-
त्रनक्षत्रे राशौ जातदेवदत्तनामधेयस्त्वं मुक्तः पूतो भूया इति त्रिवारमनुवदेत् । तत्
श्रुत्वा परिषदपि सर्वेभ्यः पापेभ्यो मुक्तो भूया इति त्रिवारमुच्चैः ब्रूयात् । ततो
यजमानः महान् प्रसादः इत्युक्त्वा प्राणानायम्य सङ्कल्प्य परिषदुपदिष्टसर्व-
प्रायश्चित्तं साङ्गोपाङ्गं कर्त्तुकामः शरीरशुद्ध्यर्थं प्रायश्चित्ताङ्गभूतं वपनं करिष्य
इति सङ्कल्प्य विज्ञाप्याऽऽज्ञां लब्ध्वा—यानि कानि च पापानि ब्रह्महत्यासमानि
च । केशानाश्रित्य तिष्ठन्ति तस्मात्केशान् वपाम्यहम् ॥" इति मन्त्रेण
जङ्घोरुलक्षःकचानुक्तरीत्या वापयित्वा स्नानं कुर्यात् । ततः परम्—आयुर्बलं
यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥
इति मन्त्रेण क्षीरकण्टकवृक्षस्य दन्तकाष्ठं गृहीत्वा दन्तधावनं कृत्वा द्वादशवार-
गण्डूषेण मुखशुद्धिं विधाय पाणिपादं प्रक्षाल्य पुनराचम्य व्रतग्रहणयोग्यतासि-
द्ध्यर्थं दशविधस्नानान्याचरिष्ये इति सङ्कल्प्य । शक्तश्चेत्स्वयमेव स्नानादि कुर्यात्
अशक्ता व्याधिताः सुवासिन्यो मूर्द्धाभिषिक्ताः शूद्राश्च ब्राह्मणेनैव कारयेयुः ।

तत्र द्रव्याणि मन्त्राश्च क्रमेण लिख्यन्ते । ॐ अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ह वा इदमेतद्भस्म भवति भस्मैवैतत् प्रयुञ्जीतेति तस्माद् बुध्यति इति अग्निरित्यादिभिर्मन्त्रैः भस्मना स्नानं कुर्यात् । गन्धद्वारेति मन्त्रेण गोमयेति द्वितीयकम् । स्योनापृथिवीति मन्त्रेण मृत्तिकया तृतीयकम् । आपोहिष्ठेति मन्त्रेण उदकेन चतुर्थकम् । गायत्र्या गोमूत्रेण पञ्चमम् । गन्धद्वारेति मन्त्रेण गोमयेन षष्ठम् । आप्पायस्वेति क्षीरेण सप्तमम् । दधिक्राव्ण इति दध्ना अष्टमम् । तेजोसि शुक्रमसीत्याज्येन नवमम् । देवस्यत्वेति कुशोदकेन दशमम् । ततो जलमवगाह्य सम्यक् स्नात्वा शुद्धवस्त्रे परिधाय पवित्रपाणिर्द्विराचम्य प्राङ्मुखः प्राणायामत्रयं कृत्वा व्रतग्रहणार्थं संकल्पं कुर्यात् । देशकालौ संकीर्त्य अमुकगोत्रस्य अमुकराशौ जातस्य अमुकनामधेयस्य मम जन्माभ्यासाज्जन्मप्रभृत्येतत्क्षणपर्यन्तं मध्यवर्तिनि काले सम्भावितानां प्रकाशकृतमहापातकानां रहस्यकृतपातकादीनां प्रकीर्णकान्तानां सर्वेषां पापानामपनोदकं साशीतिसहस्रसंख्यकप्राजापत्यकृच्छ्रात्मकं षड्गुणितषडब्दसर्वप्रायाश्चित्तं परिषदुपदिष्टं पूर्वोत्तराङ्गकलापसहितं विहितशक्यप्रत्याम्नायरूपेणाहमाचरिष्ये इति संकल्प्य । ततो नान्दीश्राद्धवैष्णवश्राद्धे कुर्यात् । तत्र प्रयोगः । देशकालौ संकीर्त्य अमुकगोत्रः अमुकशर्मा अस्मिन् प्रायश्चित्तकर्मणि नान्दीदेवतासन्निधानार्थं पितृतृप्त्यर्थं श्रीमहाविष्णुप्रीत्यर्थं च नान्दीश्राद्धं च करिष्ये इति संकल्प्य । गोत्रा नान्दीप्रपितामहीपितामहीमातरः गोत्रा नान्दीमुखा उभाभ्याम् नान्दीप्रपितामहपितामहपितरः गोत्रा नान्दीमुखा उभाभ्यां सपत्नीकमातामहमातृपितामहमातृप्रपितामहा गोत्रशर्माणो नान्दीमुखा उभाभ्यां सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा एता देवताः हिरण्येन तोषयिष्ये । ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे ॥ एतेभ्यो ब्राह्मणेभ्योऽमुकगोत्रेभ्योऽमुकनामधेयेभ्यो नान्दीदेवताप्रीतिं कामयमान आग्नेयं हिरण्यं दक्षिणां तेभ्यः संप्रददे न मम इति यज्ञेश्वरं विष्णुं हिरण्येन तोषयिष्य इति संकल्प्य हिरण्यगर्भमिति पठित्वा अस्मै ब्राह्मणाय श्रीमहाविष्णुप्रीतिं कामयमान आग्नेयीं दक्षिणां तुभ्यमहं सम्प्रददे न ममेति च । चिकीर्षितसर्वप्रायाश्चित्तसाद्गुण्यार्थं प्राच्याङ्गगोदानं करिष्य इति संकल्प्य । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ अस्मै ब्राह्मणाय इमां गां सवत्सां श्रीमहाविष्णुप्रीतिं कामयमानस्तुभ्यमहं सम्प्रददे न मम इति । ततः चिकीर्षितसर्वप्रायश्चित्तसाद्गुण्यार्थं शालाग्निहोमं करिष्ये इति संकल्प्य स्थण्डिलोल्लेखनादि अग्निप्रतिष्ठापनान्तं कृत्वा अस्मिन्नन्वाहिताग्नौ अग्निं जातवेदसमिध्मेन प्रजापतिं चाघारदेवते आज्येन अग्निष्टोमौ चक्षुषी आज्येन अग्निर्वायुः सूर्यः प्रजापतिश्च प्रधान-

देवता आज्येन आज्यशेषेण स्विष्टकृतमित्यादि यक्ष्ये इति संकल्प्य । चतसृभिर्व्याहृतिभिराज्यहोमं कृत्वा प्रायश्चित्तादि शेषं समापयेत् । ततः मया आचरितसर्वप्रायश्चित्तपूर्वाङ्गभूतपञ्चगव्यप्राशनं करिष्यमाणस्तदङ्गहोमं करिष्ये इति संकल्प्य स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा अस्मिन्नन्वाहितेनाग्निं जातवेदसमिध्मेन प्रजापतिं चाघारदेवते आज्येन । अग्निष्टोमौ चक्षुषी आज्येन अग्निं सोमं विष्णुं रुद्रं परात्मानं सवितारं वायुं सूर्यं प्रजापतिं प्रधानदेवताः पञ्चगव्येन शेषेण स्विष्टकृतमित्यादि यक्ष्ये इत्यन्तं संकल्प्य अन्वाधेयपरिसमूहनपारिस्तरणपात्रासादनमाज्यसंस्कारान्तं कृत्वा पञ्चसु पात्रेषु गव्यपञ्चकमादाय पात्रान्तरे कुशोदकं च स्थापयित्वा अन्यस्मिन्पात्रे वक्ष्यमाणभागसंख्यया तत्तन्मन्त्रैर्योजयेत् । तद्यथा गायत्र्या एकभागं गोमूत्रम्, गन्धद्वारेति अंगुष्ठाग्रपरिमाणं गोमयम्, आप्यायस्वेति सप्तमाङ्गं क्षीरम्, दधिक्राव्ण इति भागत्रयं दधि, तेजोसीत्येकभागमाज्यम्, देवस्यत्वेत्येकभागं कुशोदकं सर्वं प्रणवेनालोड्य अग्निमलंकृत्येध्ममाधाय आज्येन चक्षुषी हुत्वा वक्ष्यमाणमन्त्रैः पञ्चगव्यहोमं कुर्यात् । अग्निन्दूतम्, मेधातिथिरग्निर्गायत्री । आप्यायस्व, गौतम सोमो गायत्री, सोमायेदम् इरावती वसिष्ठो विष्णुस्त्रिष्टुप् विष्णवे इदम् । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवे इदम् । मानोमहान्तमिति मानस्तोक इति द्वयम् । कुत्सो रुद्रो जगती रुद्रायेदम् । प्रणवस्यान्तर्यामी परमात्मा गायत्रीपरमात्मने इदम् । तत्सवितुर्विश्वामित्रसवितागायत्री सवित्रे इदम् । व्याहृतीनां विश्वामित्रगौतमभरद्वाजा ऋषयः अग्निर्वायुः सूर्यः प्रजापतिर्देवता गायत्रीछन्दः अग्नये इदम् । वायवे इदम् । सूर्याय इदम् । प्रजापतये इदम् । अथ स्विष्टकृदादिहोमशेषं समापयेत् । ततो हुतशेषं कुशपवित्रेण प्रणवेनामन्त्र्य प्रणवेनाभिमन्त्र्य प्रणवेनोद्धृत्य मध्यमेनान्त्यमेन वा पलाशपर्णेन ब्रह्मतीर्थेनवा यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके । प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम्॥ इति मन्त्रं पठित्वा प्रणवेन पिबेत् । क्षत्रियादयः स्त्रियो रोगिणश्च ब्राह्मणेन होमं कारयित्वा प्राशनं कुर्युः । स्त्रीशूद्राणाममन्त्रकमेव च । ततो यजमानः परमात्मस्मरणादिना आसायं स्थित्वा सायंसन्ध्यादि कर्म निर्वर्त्य प्राणायामत्रयं कृत्वा अमुक गोत्रेण अमुकनामधेयेन मया परिषत्सन्निधौ विज्ञापितानां सर्वेषां पापानां सद्यः संक्षयार्थं परिषन्निर्णीतसर्वपापापनोदकं षड्गुणितषडब्दप्रायश्चित्तं प्राजापत्यकृच्छ्रशक्यप्रत्याम्नायरूपेणाचरिष्ये इति संकल्प्य। धेनुमूल्यादि कृच्छ्रद्रव्यं कुशकुसुमाक्षतसहितं गृहीत्वा । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ इतिमन्त्रेण । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । इति मन्त्रेण च श्रीमहाविष्णुःप्रीयतामिति मन्त्रेण चैतेभ्यो ब्राह्मणेभ्यो नानागोत्रेभ्य इमां परिषन्निर्णीतं षड्गुणितषड्-

ब्दाशीत्युत्तरसहस्रसंख्याक-प्राजापत्यकृच्छ्रप्रत्याम्नायधेनुदानादि-प्रत्याम्नायभूतामामेयहिरण्यदक्षिणं श्रीमहाविष्णुप्रीतिद्वारा मम समस्तपापक्षयं कामयमानोऽहं संप्रददे न मम इति भूमौ सजलं दद्यात्। ततस्तस्यां रात्रौ वेदपारायणपुराणश्रवणादिना जागरणं कृत्वा प्रातः स्नानादि कर्म निर्वर्त्य देशकालौ संकीर्त्य मयाऽऽचरितपरिषन्निर्णीतप्रायाश्चित्तोत्तरांगभूतं शालाग्निहोत्रम् उदीच्यां गोदानं च करिष्य इति संकल्प्य पूर्वोक्तरीत्या व्याहृतिभिराज्येन हुत्वा प्रायश्चित्तादिहोमशेषं समाप्य यज्ञसाधनभूता या इति मन्त्रं पठित्वा इमां गां प्रायश्चित्तोदीच्यांगभूतां श्रीमहाविष्णुप्रीतिद्वारा सर्वप्रायाश्चित्तं साद्गुण्यं कामयमानस्तुभ्यमहं सम्प्रददे न मम इति दद्यात्। प्राच्योदीच्यां गोदाने धेनोरभावे तन्मूल्यं दक्षिणां च दद्यात्। ततः परं मयाऽऽचरितसर्वप्रायश्चित्तसाद्गुण्यार्थं न्यूनातिरिक्तदोषपरिहारार्थं च दश दानानि करिष्ये इति संकल्प्य। तत्र द्रव्याणि दक्षिणया सह दश ब्राह्मणेभ्यो दद्यात्॥ दशदानानि। यथा—गोभूतिलहिरण्याज्यवासोधान्यगुडानि च। रौप्यं लवणमित्येवं दशदानं प्रकीर्तितम्॥ गोदानमन्त्रस्तु प्रागुक्त एव। भूमिदानमन्त्रः—सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता। अनन्तपुण्यफलदा ततः शान्तिं प्रयच्छ मे॥ तिलदानमन्त्रः—तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः। तिलदानादसत्यं मे पापं नाशय केशव॥ स्वर्णदानमन्त्रः—स्वर्णं पवित्रममलं स्वर्णं पापप्रणाशनम्। स्वर्णं हि शंकरो यस्मादतः शान्तिं प्रयच्छ मे॥ आज्यदानस्य—कामधेनुसमुद्भूतं सर्वक्रतुषु संस्थितम्। देवानामाज्यमाहारस्ततः शान्तिं प्रयच्छ मे॥ वस्त्रस्य—शीतवातोष्णसन्त्राणं लज्जानिर्हरणं परम्। देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छ मे॥ धान्यस्य—धान्यं करोषि दातारमिह लोके परत्र च। तस्मात्स मुच्यते धान्यमतः शान्तिं प्रयच्छ मे॥ गुडस्य—यस्माद्रसानां प्रवरमिक्षुदण्डसमुद्भवम्। तस्मान्मम परां लक्ष्मीं प्रयच्छ गुड सर्वदा॥ रौप्यस्य—रुद्रनेत्रसमुद्भूतं रजतं पितृवल्लभम्। तस्मादस्य प्रदानेन प्रीणातु मम शंकरः॥ लवणदानस्य—लवणे वै रसाः सर्वे लवणे सर्वदेवताः। सर्वपाकाद्यधिष्ठानं लवणं मेऽस्तु सौख्यदम्॥ इति मन्त्रान्पठित्वा एतेभ्यो ब्राह्मणेभ्य इमानि द्रव्याणि श्रीमहाविष्णुप्रीतिं कामयमानोऽहं सम्प्रददे न ममेति दद्यात्। अतःपरमाचरितसर्वप्रायश्चित्तसाद्गुण्यार्थं भूदानं करिष्य इति संकल्प्य। हिरण्यगर्भगर्भस्थमिति मन्त्रं पठित्वा इमाम् भूरि दक्षिणां श्रीविष्णुप्रीतिं कामयमानो दीनान्धकृपणेभ्यः सम्प्रददे न ममेति दद्यात्॥ अथालक्ष्मीपरिहारार्थमायुष्याभिवृद्ध्यर्थं निरीक्षितादिदानं करिष्य इति संकल्प्य। रूपंरूपमिति पठेत्। याऽलक्ष्मीर्यच्च मेऽदो मे सर्वाङ्गेषु व्यवस्थितम्। तत्सर्वं नाशयाज्य त्वं श्रियं पुष्टिं च वर्धय॥ इति पठित्वा अस्मै ब्राह्मणायेत्यादि इदं कांस्यपात्रपूरितं निरीक्षिताज्यं सदक्षिणाकं ममालक्ष्मीपरिहा-

रार्थमायुष्याभिवृद्ध्यर्थं च कामयमानस्तुभ्यमहं सम्प्रददे न ममेति मन्त्रेण दद्यात्। अनन्तरं मयाचीर्णसर्वप्रायश्चित्तसाद्गुण्यार्थं ब्राह्मणान् भोजयिष्ये इति संकल्प्य। सहस्रं पञ्चशतानि वा शतं पञ्चाशद् वा ब्राह्मणान् स्वशक्त्यनुसारेण भोजयित्वा आशीर्वादं गृहीत्वा पश्चाद्दिष्टैर्बन्धुभिः सह स्वयं पारणं कुर्यात्। ततः परं—यस्य स्मृत्या च नामोक्त्या इति। प्रायश्चित्तान्यशेषाणि। इति च मन्त्रद्वयं यथाशक्ति नामत्रयं च जप्त्वा गोत्रादियुक्तेन मया आचरितपूर्वोत्तराङ्गसहितसर्वप्रायश्चित्तकर्मणि अशेषयज्ञरूपी भगवान् श्रीमहाविष्णुः प्रीयतामिति वदेत्। इदं च दिनत्रयप्रायश्चित्ताचरणशक्तविषयम्। अशक्तानां बालानां रोगिणां च मलापकर्षणस्नानादि भूमिदानान्तं साङ्गोपाङ्गप्रायश्चित्तमेकस्मिन्नेव दिने उपवासं च कारयित्वा परेद्युर्ब्राह्मणभोजनं व्रतपारणं च कारयेत्॥

अथ सुवासिनीनां प्रायश्चित्ताचरणे—मृत्तिकास्नानशालाग्निहोमपञ्चगव्यहोमाद्याचरणं ब्राह्मणेन कारयेत्। वपननान्दीश्राद्धवैष्णवश्राद्धानि न सन्त्येव। पापनिवेदने प्रकीर्णकेषु परमात्मस्मरणराहित्यान्तमुक्त्वा स्वार्थपरार्थधर्मक्रियानुकूलक्रियानिरोधनक्रियानिन्दनभर्तृक्रियानिन्दनभर्तृवचोल्लङ्घनश्वश्रूश्वशुरदेवरादिवचनोल्लङ्घनसावित्रीव्रतराहित्यसाभिलापपरपुरुषनिरीक्षणसम्भाषणपरिहसनसहयानासनशयनावस्थानाज्ञातपरपुरुषसंसर्गपैतृकव्रतोपवासादिनिषिद्धदिनसङ्गमरहोवस्थानभर्तृदेवतासूर्यादिग्रहादर्शनभर्तृसम्भाषणराहित्यगृहोपकरणादिद्रव्यादर्शनोदक्याशूद्रग्रामान्त्यजस्पर्शनचाण्डालनिरीक्षणवाक्यश्रवणपतिकुलवचनभर्तृश्वश्रूदेवाग्निराहित्यशिशुताडनक्षुत्परीतशिशुस्तन्याप्रदानभर्तृश्वशुरादिमैत्रीभेदनपंक्तिभेदव्यञ्जनादिप्रदानभर्तृवशीकरणदोषचिन्तनदेवब्राह्मणगुरुदूषणभर्तृप्रवासकालद्विवारभोजनपरगृहयानदेहलीवासपरगृहवासकुड्यजालवातायनादिविचरणरथ्योपसर्पणसमाजोत्सवदर्शनजननीगृहयानदिवास्वापभर्तृश्वशुरश्वश्रूसमानासनशय्याद्यवस्थानतदभिवादनराहित्यधान्यगृहोपकरणादिविक्रयभर्त्रननुज्ञातव्रतोपवासानियमाचरण-देहलीगृहाद्यलंकरणराहित्य-सदानिष्ठुरभाषण-वृथाक्रोधनबोधनोरःशिरोमुखताडनक्षुधितदासीदासपशूपेक्षणभक्ताप्रदानताम्बूलाञ्जनहरिद्रालेपनतिलकमङ्गलसूत्रादिराहित्यकेशप्रसाधनराहित्यसदामलिनवस्त्रधारणस्वेच्छाकामुकत्वभर्तृत्वङ्कारहुङ्कारातिरस्कार-स्वयम्प्रथमभोजन-शयनप्रबोधन-भर्तृचित्तारञ्जनादि-प्रकीर्णकानां ज्ञानतोऽज्ञानतश्चेति समानम्। अनुवादकवचनेऽपि स्वार्थपरार्थविप्रकीर्णकादिभर्तृचित्तारञ्जनात् प्रकीर्णकानामिति ज्ञानतोऽज्ञानतो वेत्यादि यथायथम् अनुवादः कार्यः॥ अथ विधवानां पापनिवेदने पापविशेषः कथ्यते। सुवासिनीत्वप्रयुक्तस्वार्थपरत्वभर्तृचित्तारंजनान्तमुक्त्वा अस्नातभोजन-द्विवारभोजनपर्युषितान्नभोजनकांस्यपात्रभोजनरात्रिभोजनपुत्राद्युच्छिष्टान्नभोजनमदकरद्रव्यभक्षणताम्बूलचर्वण-

बलीवर्दारोहणकुसुमरक्तचित्रवस्त्रादिधारणतिलकांजनगन्धकस्तूरीकर्पूरघुसृणसुर-भिपुष्पादिधारणभर्तृस्मरणतर्पणादिराहित्यभर्तृनिन्दाश्रवणस्वशरीरपोषणादिप्रकीर्णकानां यथायथं निवेशः। दासीकुलटावेश्यामैत्रीकरणसत्कथाश्रवणराहित्यभ्रातृ-भार्यादिमैत्रीभेदनस्वाधीनपरमैथुनशब्दश्रवणवीक्षणखट्वाशयनयानारोहणोष्णोदक-स्नानतीर्थाचरणराहित्यादिप्रकीर्णकानां च यथायथं निवेशः। ज्ञानतोऽज्ञानत-श्चेति समानम्। विधवानां प्रायश्चित्ताचरणे शिरोमात्रवपनम्, पाणिपादनख कृन्तनम्, मृत्तिकास्नानम्, दशविधस्नानानि च सा स्वयमेव कुर्यात्। नान्दीश्राद्धं विष्णुश्राद्धं चास्त्येव। पञ्चगव्यहोमं ब्राह्मणेन कारयेत्। शेषमन्यत् समानम्॥

इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना कर्मकाण्डाचार्य-कर्मकाण्डकोविद-कर्मकाण्डभास्कर-श्रौतभूषण इत्युपाधिचतुष्टयविभूषितेन गौडपण्डितश्रीचतुर्थी-लालशर्मणा विरचिते प्रायश्चित्तप्रकाशे प्रयोगकाण्डो द्वितीयः समाप्तः॥

---

## कर्मविपाककाण्डः।

अथ कर्मविपाककाण्डस्तृतीयः प्रारभ्यते। तत्र तावत्कर्मविपाकशब्दार्थः। कर्मणः अधर्ममूलकस्य अशुभफलजनकस्येति यावत्। विपाकः परिणामः। अथवा कर्मणां विपाकः कर्मविपाकः। स च त्रिविधः। नरक-योनि-रोग-रूपात्मकः। इह योनिरोगादिभोगजनकदुःखमयपरिणामः। अमुत्र नरकभोगा-दिजनकदुःखमयपरिणामश्च। कर्माऽपि त्रिविधम्। संचितम्, आरब्धम्, क्रिय-माणं च। तथा च वृद्धसूर्यारुणसंवादे-"त्रिविधं संचितारब्धक्रियमाणमिति ध्रुवम्। प्रारब्धकर्मणां सूत भोगादेव क्षयो भवेत्॥ संचितक्रियमाणानां प्राय-श्चित्तैस्तथैव च। कर्मणा कर्मणच्छेद इति वेदविदो विदुः॥ आयसेन यथा यत्ता-दायसस्य निकृन्तनम्॥" मनुस्मृतौ-"चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः॥" याज्ञवल्क्योऽपि-"प्रायश्चित्तमकु-र्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान्। तस्मा-त्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये। एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति॥" मनुस्मृतौ-"शुभाशुभफलं कर्म मनोवाग्देहसंभवम। कर्मजा गतयो नृणामुत्त-माधममध्यमाः॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्॥ पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः। असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोप-सेवा च शारीरं त्रिविधं स्मृतम्॥ मानसं मनसैवायमुपभुंक्ते शुभाशुभम्। वाचा वाचाकृतं कर्म कायेनैव च कायिकम्॥ शारीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥" अथ नरकानाह मनुः-"तामिस्र-

सन्धतामिस्रं महारौरवरौरवौ । नरकं कालसूत्रं च महानरकमेव च ॥ संजीवनं महावीचिं तपनं संप्रतापनम् । संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥ लोहशङ्कुमृजीषं च पंथानं शाल्मलीं नदीम् । असिपत्रवनं चैव लोहदारकमेव च ॥ यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः । स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥ " ब्रह्मवैवर्त्ते विशेषः-" नरकाणां च कुण्डानि सन्ति नानाविधानि च । नानापुराणभेदेन नामभेदानि तानि च ॥ विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् । भयङ्कराणि घोराणि हे वत्से कुत्सितानि च ॥ षडशीतिश्च कुण्डानि संयमन्यां च सन्ति च । निबोध तेषां नामानि प्रसिद्धानि श्रुतौ सति । अन्यानि चाप्रसिद्धानि तत्र क्षुद्राणि सन्ति वै ॥"

अथ नरककुण्डनामानि । १ वह्निकुण्डम्-( पापभेदान्नरककुण्डविशेषगामिनः ) कटुवाचा वान्धवदग्धकृद्गात्रलोमप्रमाणाब्दं तत्र स्थित्वा पशुयोनिमवाप्नोति ॥ २ तप्तकुण्डम्-ब्राह्मणं तृषितं क्षुध्यं गृहमागतमतिथिं वा यो न भोजयति स प्रयाति ॥ ३ क्षारकुण्डम्-रविवारार्कसंक्रान्त्याममावास्यायां श्राद्धवासरे वा वस्त्रे क्षारसंयोजकः ॥ ४ विट्कुण्डम्- स्वदत्तां परदत्तां वा ब्राह्मणवृत्तिं यो हरति स षष्टिवर्षसहस्राणि गच्छति ॥ ५ मूत्रकुण्डम्-परकीयतडागकूपादिषु तडागादिकं करोति तदुत्सर्गं च तद्रेणुमानवर्षाणि तत्र तिष्ठति ॥ ६ श्लेष्मकुण्डम्-एकाकी मिष्टान्नमश्नाति स पूर्णमब्दशतं श्लेष्मभोजी निवसति ॥ ७ गरकुण्डम्-पितृमातृगुरुभार्यापुत्रपुत्र्यादीन् यो न पुष्णाति संपूर्णसहस्राब्दम्॥ ८ दूषिकाकुण्डम्-अतिथिं दृष्ट्वा वक्रदृष्ट्यावलोकनकर्त्ता ॥ ९ वसाकुण्डम्-विप्राय दत्त्वा तद्द्रव्यमन्यस्मै प्रयच्छति ॥ १० शुक्रकुण्डम्-परस्त्रीगामी परपुरुषगामिनी च ॥ ११ असृक्कुण्डम्-गुर्वादिताडकस्तद्रक्तपातकारकश्च ॥ १२ अश्रुकुण्डम्-हरिभक्तमश्रुमन्तं गायन्तं दृष्ट्वा यो हसति ॥ १३ गात्रमलकुण्डम्-अशुद्धमानसः शश्वत् खलताकारी च ॥ १४ कर्णविट्कुण्डम्-बधिरोपहासकृत् ॥ १५ मज्जाकुण्डम्-लोभात्स्वभोजनार्थं जीवहन्ता ॥ १६ मांसकुण्डम्-अर्थलोभात् कन्याविक्रयी ॥ १७ नखकुण्डम्-श्राद्धोपवासादिषु संयमत्यागी ॥ १८ लोमकुण्डम्-श्राद्धोपवासश्राद्धादिषु क्षौरकर्म कारयति सः ॥ १९ केशकुण्डम्-सकेशं पार्थिवं लिङ्गं योऽर्चयति ॥ २० अस्थिकुण्डम्-गयायां विष्णुपदे पितृपिण्डादाता ॥ २१ ताम्रकुण्डम्-गुर्विणीगामी ॥ २२ लौहकुण्डम्-अवीरान्नमृतस्नातान्नं च भुङ्क्ते ॥ २३ तीक्ष्णकण्टककुण्डम्-कटुवाचा स्वामिताडयिता ॥ २४ विषकुण्डम्-विषेण जीवहन्ता ॥ २५ घर्मकुण्डम्-स्वेदयुक्तहस्तेन देवद्रव्यस्पर्शकृत् ॥ २६ तप्तसुराकुण्डम्-शूद्रान्नज्ञातः शूद्रान्नभोजी ॥ २७ प्रतप्ततैलकुण्डम्-दण्डेन वृषताडकः वृषवाहकश्च ॥ २८ कुन्तकुण्डम्-कुन्तलौ-

हवडिशैर्जीवहन्ता ॥ २९ कृमिकुण्डम्-मत्स्यामिषभोक्ता विप्रो हरिनैवेद्याभुक् च ॥ ३० पूयकुण्डम्-शूद्रयाजी तच्छ्राद्धभुक् तच्छवदाही च ब्राह्मणः ॥ ३१ सर्पकुण्डम्-श्रीकृष्णचन्द्रपदचिह्नमस्तकस्य सर्पस्य हन्ता सर्पमात्रहन्ता च ॥ ३२ मशकुण्डम्-विधिं प्रकल्प्य क्षुद्रजीवान् यो हन्ति ॥ ३३ दंशकुण्डम्-विधिं हित्वा जीवहन्ता ॥ ३४ गरलकुण्डम्-मधुमक्षिका हत्वा मधुग्राही ॥ ३५ वज्रदंष्ट्रकुण्डम्-अदण्डये दण्डकृद्विप्रे शरीरदण्डकृच्च॥३६ वृश्चिककुण्डम्-अर्थलोभेन प्रजापीडको राजा ॥ ३७ शरकुण्डम्, ३८ शूलकुण्डम्, ३९ खड्ग कुण्डम्-ब्राह्मणः शस्त्रधारी, धावकः, सन्ध्याहीनो हरिपूजाहीनश्च । शरादिषु त्रिषु कुण्डेषु स्वलोमाब्दवर्षपर्यंतं तिष्ठति ॥ ४० गोलकुण्डम्-अल्पदोषेण सान्धकारे कारागारे यः प्रजा निवध्नाति ॥ ४१ नक्रकुण्डम्-सरोवरादुत्थितान्नक्रादीन् हन्ता ॥ ४२ काककुण्डम्-कामेन परस्त्रीवक्षःश्रोणीस्तनास्यं च योऽवलोकयति॥ ४३ सञ्चानकुण्डम्-स्वर्णकारःस्वर्णव्यापारे स्तेयकर्त्ता च ॥ ४४ वाजकुण्डम्-ताम्रलौहचौरः ॥ ४५ वज्रकुण्डम्-देवचौरो देवद्रव्यादिहारकश्च ॥ ४६ तप्तपाषाणकुण्डम्-देवद्विजयो रौप्यगोवस्त्राणां चौरः ॥ ४७ तीक्ष्णपाषाणकुण्डम्-देवविप्रयोः पित्तलकांस्यपात्रचौरः॥ ४८ लालाकुण्डम्-पुंश्चल्यन्नभुक् तद्वृत्तिजीवी च ॥ ४९ मसीकुण्डम्-म्लेच्छसेवी मसीजीवी च ब्राह्मणः ॥ ५० चूर्णकुण्डम्-देवद्विजयोः शस्यधान्यताम्बूलासनचौरः ॥ ५१ चक्रकुण्डम्-विप्रद्रव्यं हृत्वा चक्रकारी ॥ ५२ वक्रकुण्डम्-विप्रबान्धवयोर्वक्रताकारी ॥ ५३ कूर्मकुण्डम्-हरिशयने कूर्ममांसभुक् ॥ ५४ ज्वालाकुण्डम्, ५५ भस्मकुण्डम्-देवद्विजयोर्घृततैलादिहृत् । ५६ दग्धकुण्डम्-देवद्विजयोर्धात्रीगन्धतैलद्रव्याणामपहर्त्ता ॥ ५७ तप्तशूर्म्मीकुण्डम्-बलखलत्वादिना परभूमिहरः ॥ ५८ असिपत्रकुण्डम्-अर्थलोभात् खड्गेन जीविनच्छेदी नरघाती च ॥ ५९ क्षुरधारकुण्डम्-ग्रामनगरादिदाहकृत् ६० सूचीमुखकुण्डम्-परकर्णे मुखं दत्त्वा परनिन्दकः परदोषश्लाघी वेदब्राह्मणनिन्दकश्च॥ ६१ गोधामुखकुण्डम्-गृहं भित्वा वस्तुगोछागमेषचौरः ॥ ६२ नक्रमुखकुण्डम्-सामान्यद्रव्यचौरः । ६३ गजदंशकुण्डम्-गजतुरगनरचौरः ॥ ६४ गोमुखकुण्डम्-तृषितां जलं पिबंतीं गां वारकः ॥ ६५ कुम्भीपाककुण्डम्-गो-स्त्री-भिक्षु-भ्रूण-ब्रह्महा-अगम्यागामी-दीक्षा-संध्याहीनस्तीर्थप्रतिग्राही ग्रामयाजी देवलशूद्रसूपकारी वृषलीपतिश्च॥ ६६ कालसूत्रकुण्डम्-पुंश्चलीवेश्यान्नभुक् तत्संसर्गी च । ६७ अवटोदकुण्डम्-कुलटापतिव्रतावेश्यादिषट्दुष्टस्त्रीगामी । ६८ अरुन्तुदकुण्डम्-चन्द्रसूर्यग्रहणे निषिद्धकालभोजी । ६९ पांसुभोजनकुण्डम्-एकस्मै वाक्प्रदत्तकन्याया अन्यस्मै दाता । ७० पाशवेष्टकुण्डम्-दत्तापहारी ॥ ७१ शूलप्रोतकुण्डम्-अभक्त्या शिवलिङ्ग

पूजकः । ७२प्रकम्पनकुण्डम्–विप्रदण्डकृत्तत्कम्पतद्भयदायी च । ७३ उल्का-मुखकुण्डम्–सकोपवदना स्वामिनि कटुवादिनी स्त्री । ७४ अन्धकूपकुण्डम्–शूद्रभोग्या ब्राह्मणी ७५ ॥ वेधनकुण्डम्–वेश्या, सा च पञ्च वा षट्पुंगमना-द्भवति । ७६ दण्डताडनकुण्डम्–पुङ्गी, सा च सप्ताष्टपुंगमनाद्भवति ॥७७ जाल-बद्धकुण्डम्–महावेश्या, सा च अष्टाधिकपुंगमनाद्भवति । ७८ देहचूर्ण-कुण्डम्–कुलटा, सा च पुंद्वयगमनाद्भवति ।७९ दलनकुण्डम्–स्वैरिणी वृषली, सा चतुःपुंगमनाद्भवति । ८० शोषणकुण्डम्–धृष्टा पुंश्चली, सा च त्रिपुंगमना-द्भवति ।८१कषायकुण्डम्–सवर्णागामी । ८२ शूर्पकुण्डम्–ब्राह्मणीगामी क्षत्रियो वैश्यश्च ॥ ८३ ज्वालामुखकुण्डम्–करे तुलसीगङ्गाजलदेवशिलाश्च कृत्वा प्रति-ज्ञाकृत् । तदपालको मिथ्याशपथी । मित्रद्रोही विश्वासघाती मिथ्यासाक्ष्यदश्च ॥ ८४जिह्मकुण्डम्–नित्यक्रियाहीनः वेदवाक्यास्थारहितः मन्दोपहासी व्रतोपवास-हीनश्च । ८५ धूमान्धकुण्डम्–देवविप्रयोर्द्धनहारी। ८६ नागवेष्टनकुण्डम्–वैद्य दैवज्ञवृत्तिकारी, लाक्षालोहव्यापारी, रसादिविक्रयी च ब्राह्मणः ॥

अथ नरकादागतानां योन्यः कथ्यन्ते । मनुस्मृतौ–"बहून्वर्षगणान्घोरान् नरकान्प्राप्य तत्क्षयात् । संसारान्प्रतिपद्यन्ते महापातकिनस्त्विमान्॥यां यां योनिं तु जीवोऽयं येन येनेह कर्मणा । क्रमशो याति लोकेऽस्मिंस्तत्तत्सर्वं निबोधत" ॥ याज्ञवल्क्यस्मृतावपि–" महापातकजान्घोरान्नरकान्प्राप्य दारुणान् । कर्मक्ष-यात्प्रजायन्ते महापातकिनास्त्विह॥"अथ चतुरशीतिलक्षयोनिप्रकारः॥बृहद्गा-रुडे–"चतुरशीतिलक्षाणि चतुर्भेदाश्च जन्तवः । अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जरायुजाः ॥ एकविंशतिलक्षाणि ह्यण्डजाः परिकीर्त्तिताः । स्वेदजाश्च तथैवोक्ता उद्भिज्जास्तत्प्रमाणतः ॥ जरायुजाश्च तावन्तो मनुष्याद्याश्च जन्तवः । सर्वेषामेव जन्तूनां मानुषत्वं सुदुर्लभम् ॥ " अथ मनुयाज्ञवल्क्यादिप्रोक्तमहापातका-दिजनितयोनयः क्रमेण लिख्यंते। १ ब्रह्महा–श्वशूकरखरोष्ट्रगोऽजाऽविपक्षि-चण्डालपुक्कसानां क्रमेण योनिं प्राप्नोति ।२सुरापी–कृमिकीटपतङ्गविड्भुक्पक्षि-हिंस्रसत्त्वानां योनिम् ।३ स्तेयी–लूताहिसरटाम्बुचारिहिंस्रपिशाचानां योनिम् । ४ गुरुतल्पगामी–तृणगुल्मलताक्रव्याददंष्ट्रिक्रूरकर्मकृताम् । ५ धान्यहारी–मूषकः । ६ यानहारी–उष्ट्रः । ७ फलमूलहारी–वानरः । ८ दुग्धहर्त्ता–काको वलाकश्च ।९ गृहोपस्करहारी–चटकः । १० मधुहारी–दंशः।११मांसहर्त्ता–गृध्रः ।१२ गोहर्त्ता–गोधा,सर्पश्च ।१३ अग्निहारी–वकः।१४ इक्ष्वादिरसहारी–श्वा । १५ लवणहारी–चीयाख्यः कीटः । १६ कांस्यहारी–हंसः । १७ वस्त्रा-पहारी–पतंगः । १८ शय्यापहारी–क्षपणकः । १९ शंखभुक्त्युपहरी–कपाली । २० दीपापहारी–उलूकः । २१ विद्याविक्रयी–पुरुषमृगः ।

२२ वेदविक्रयी-द्वीपी । २३ बहुयाजकः-जलप्लवः । २४ अयाज्ययाजकः-वराहः । २५ अनिमन्त्रितभोजी-वायसः । २६ मृष्टैकभोजी-वानरः । २७ यतस्ततोभोजी-मार्जारः । २८ वनदाही-खद्योतः । २९ दारकाचार्यः-मुखविगन्धी । ३० पर्युषितभोजी-कृमिः । ३१ अदत्तादायी-बलीवर्दः । ३२ मत्सरी-भ्रमरः । ३३ चाण्डालीगामी-अजगरः । ३४ प्रव्रजितागामी-मरुपिशाचः । ३५ शूद्रागामी-दीर्घकीटः । ३६ सवर्णाभिगामी-दरिद्रः । ३७ जलहारी-मत्स्यः । ३८ अविक्रेयविक्रयी-गृध्रः । ३९ राजमहिषीगामी-नपुंसकः । ४० नृपाक्रोशकः-गर्दभः । ४१ गोगामी-मण्डूकः । ४२ अनध्यायाध्येता-शृगालः । ४३ परयोषिद्विप्रस्वहर्त्ता-ब्रह्मराक्षसः, ऋक्षश्च । ४४ घृतहर्त्ता-नकुलः । ४५ तैलहर्त्ता-तैलपकः । ४६ दधिहर्त्ता-बलाका । ४७ कौशेयवस्त्रहारी-तित्तिरः । ४८ क्षौमवस्त्रहारी-मण्डूकः । ४९ कार्पासवस्त्रहारी-क्रौञ्चः । ५० गुडहर्त्ता-वाग्गुदनामा पक्षिविशेषः । ५१ सुगन्धिद्रव्यहर्त्ता-छुच्छुन्दरिः । ५२ पत्रशाकहर्त्ता-मयूरः । ५३ सिद्धान्नहर्त्ता-शल्यः । ५४ व्रीहियवादिहर्त्ता-शल्यकः । ५५ मृगहस्तिहारी-वृकः । ५६ अश्वहारी-व्याघ्रः । ५७ पञ्चमहायज्ञत्यागी विप्रः-विड्वराहः । ५८ बहुतर्जकः-मार्जारः । ५९ अपात्राध्यापकः-बलीवर्दः । ६० पर्युषितान्नदाता-कुक्कुरः । ६१ पुस्तकहारी-जन्मान्धः । ६२ विषदाता-सर्पः । ६३ अप्राप्तयौवनस्त्रीगामी-अजगरः । ६४ गुरुदाराभिलाषी-कृकलासः । ६५ जलप्रस्रवणभेदी-मत्स्यः । ६६ अयोनिगामी-वृकः । ६७ क्रयवञ्चनकारी-उलूकः । ६८ प्रतिश्रुत्यादाता-जम्बूकः । ६९ पदाग्निस्पर्शकः-मार्जारः । ७० रजस्वलागामी-षण्ढः । ७१ उपानत्तृणकार्पासहर्ता-मेषः । ७२ मृगयाव्यसनी-वधिकगृहे छागः । ७३ विषपानेन मृतः-गिरौ कृष्णसर्पः । ७४ निरंकुशस्वभावः-कुञ्जरः । ७५ सन्ध्यागायत्रीजपहीनो विप्रः-बकः । ७६ गुरुसेवारहितः शिष्यः-गवयः । ७७ गुरुं हुंकृत्य त्वंकृत्य-वने ब्रह्मराक्षसो जायते । ७८ सतामसत्कारकारी-शिवा । ७९ आशास्नेहविघातकः-चक्रवाकः । ८० मातृपितृगुरुभ्रातृवैरकृत्-असकृद् गर्भे योनौ च नश्यति । ८१ श्वश्वोर्गालीप्रदा नारी-जलौका । ८२ भर्तृभर्त्सिका-यूका । ८३ परपुरुषगामिनी-वल्गुली गृहगोधा द्विमुखी सर्पिणी च । ८४ स्वगोत्रोपघाती स्वगोत्रागामी च-तरक्षुः, शल्लकः, ऋक्षश्च । ८५ मित्रपत्नीगामी-गर्दभः । ८६ गुदगामी-विड्वराहः । ८७ वृषलीपतिः-वृषः । ८८ महाकामी-अश्वः । ८९ एकादशाहभोजी-श्वा । ९० देवलकः-कुक्कुटः । ९१ विप्रवृत्तिहारी-मर्कटः श्वा कपिश्च । "एवं दुष्कर्मकर्त्तारो भुक्त्वा निरययातनाम् । जायन्ते पापशेषेण प्रोक्तास्वेतासु

योनिषु ॥ १ ॥ ततो जन्मसहस्रेषु प्राप्य तिर्यक्शरीरताम् । दुःखानि भारवहनोद्भवादीनि लभन्ति ते ॥ २ ॥ पक्षिदुःखं ततो भुक्त्वा वृष्टिशीतातपोद्भवम् । मानुषं लभते पश्चात् समीभूते शुभाशुभे ॥ ३ ॥" अथमहापातकोपपातकोद्भवा रोगास्तदुपायाश्चलिख्यन्ते । शातातपस्मृतौ वृद्धसूर्यारुणसंवादे च–"प्रायश्चित्तविहीनानां महापातकिनां नृणाम् । नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥ १ ॥ प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचकम् । प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥ २ ॥ महापातकजं चिह्नं सप्तजन्मनि जायते । उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥ ३ ॥ दुष्कर्मजा नृणां रोगा यान्ति चैव क्रमाच्छमम् । जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ ४ ॥ पूर्वजन्मकृतं पापं नरकान्ते परिक्षयेत् । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥ ५ ॥ कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ६ ॥ कुष्ठं च राजयक्ष्मा च प्रमेहो ग्रहणी तथा । मूत्रकृच्छ्राश्मरी कासा अतिसारभगन्दरौ ॥७॥ दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् । इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ ८ ॥ जलोदरयकृत्प्लीहशूलशोफव्रणास्तथा । श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥ ९ ॥ रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः । दण्डापतानकश्वित्रवपुःकम्पविचर्चिका॥ १० ॥ वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः । अर्श आद्या नृणां रोगा अतिपापाद्भवन्ति हि ॥ ११ ॥ अन्ये च बहुधा रोगा जायन्ते दोषसंकराः । उच्यन्तेऽथ निदानानि प्रायश्चित्तानि च क्रमात् ॥ १२ ॥ महापापेषु सर्वस्वं तदर्धं तूपपातके । दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम् ॥ १३ ॥"

| पातकी. | रोगी. | उपायाः । |
|---|---|---|
| १. ब्रह्महा | क्षयरोगी, पाण्डुकुष्ठी | शातातपोक्तं विधिमाचरेत् |
| २ सुरापः | श्यावदन्तकः, मूत्राघाती च | कृच्छ्रं सान्तपनं कार्यं सवत्सां गां च दद्यात् । |
| ३ स्वर्णस्तेयी | कुनखी-मूत्रकृच्छ्री च | चान्द्रायणत्रयं कृत्वा स्वर्णशतं दद्यात् । |
| ४ गुरुतल्पगः | दुश्चर्मा | शातातपोक्तं विधिं कुर्यात् । |
| ५ ब्रह्महादिचतुर्णां संसर्गी | तत्तद्रोगवान् | शातातपोक्तं तत्तत् विधिं कुर्यात्। |
| ६ अजाघाती | अधिकाङ्गः | विचित्रवस्त्रयुक्तामजां दद्यात् । |
| ७ अश्वहन्ता | वक्रतुण्डः | शतपलं चन्दनं दद्यात् । |
| ८ मेषघाती | पाण्डुरोगी | पलपरिमितकस्तूरीदानम् । |

| | | |
|---|---|---|
| ९ उष्ट्रहन्ता | विकृतस्वरः | पलपरिमाणं कर्पूरं दद्यात् । |
| १० काकघाती | कर्णहीनः श्मश्रुहीनश्च स्त्रीचेत् श्मश्रुमती । | कृष्णां गां दद्यात् |
| ११ कारुहन्ता | रूक्षः | शुक्लवर्णं वृषभं दद्यात् । |
| १२ खरहन्ता | खररोमा | निष्कसुवर्णनिर्मितप्रतिकृतिं दद्यात् । |
| १३ गजघाती | सर्वकार्येष्वसिद्धार्थः | गणेशप्रतिमांप्रासादंकृत्वा स्थापयेत् । |
| १४ गोत्रहा | कुष्ठी, निर्वंशश्च | शतप्राजापत्यव्रतपूर्वकभूमिदानं महाभारतश्रवणं च कुर्यात् । |
| १५ गोहान्ता | कुष्ठी | शातातपोक्तं प्रायश्चित्तं कुर्यात् । |
| १६ तरक्षुहन्ता | केकराक्षः | धेनुं दद्यात् । |
| १७ पितृहन्ता | कुष्ठी, चेतनाहीनश्च । | शातातपोक्तं प्रायश्चित्तम् । |
| १८ बालघाती | मृतवत्सः | ब्राह्मणोद्वाहनम्, हरिवंशश्रवणंच |
| १९ भ्रातृहा | मूकः | चान्द्रायणत्रयंचरित्वा पलसुवर्णसहितपुस्तकं दद्यात् । |
| २० माहिषीघाती | कृष्णगुल्मी | निष्कत्रयसुवर्णनिर्मितां प्रतिकृतिं दद्यात्। |
| २१ मातृहा | अन्धः | पितृघ्नप्रायश्चित्तं कुर्यात् । |
| २२ राजहा | क्षयरोगी | गोभूहिरण्यमिष्टान्नजलवस्त्रघृतधेनुतिलधेनुदानम् । |
| २३ मार्जारहा | पीतपाणिः | पलसुवर्णनिर्मितं पारावतं दद्यात् । |
| २४ बकघाती | दीर्घनासः | गां दद्यात् । |
| २५ वैश्यहन्ता | रक्तार्वुदी | चत्वारि प्राजापत्यानि चरित्वा सप्त धान्यदानम् । |
| २६ शुकसारिकाघाती | स्खलितवाक् | ससुवर्णं श्रेष्ठपुस्तकदानम् । |
| २७ शूकरहन्ता | दन्तुरः | सदक्षिणं घृतकुम्भं दद्यात् । |
| २८ शूद्रहन्ता | दण्डापतानकः | प्राजापत्यव्रतं कृत्वा सदक्षिणां धेनुं दद्यात् । |
| २९ शृगालहा | विपादकः | .... .... .... .... .... |
| ३० स्त्रीहन्ता | अतिसारी | दशाश्वत्थवृक्षान्रोपयेत् शर्कराधेनुदानं शतविप्रभोजनं च । |
| ३१ हरिणघाती | खञ्जः | पलपरिमितसुवर्णाश्वं दद्यात् । |
| ३२ अभक्ष्यभोक्ता | कृमिकोदरः | पञ्चभीष्मव्रतं कुर्यात् । |

| | | |
|---|---|---|
| ३३ गर्भपातकर्त्ता | यकृत्प्लीहजलोदररोगी | पलत्रयपरिमितसुवर्णरौप्यताम्रान्वित जलधेनुदानम्। |
| ३४ दावाग्निदः | रक्तातिसारी | उदपानं वटवृक्षरोपणं च कुर्यात्। |
| ३५ दुष्टवाग्गमी | खण्डितः | दुग्धसमन्वितघटद्वयं पलद्वयपरिमितं रौप्यं च दद्यात्। |
| ३६ कदन्नदः | मन्दोदराग्निः | प्राजापत्यत्रयं कृत्वा शतं द्विजान् भोजयेत्। |
| ३७ धूर्तः | अपस्मारी | ब्रह्मकूर्चमयीं धेनुं सदक्षिणां गां च दद्यात्। |
| ३८ परनिन्दावान् | खल्वाटः | कांचनसहितां गां दद्यात्। |
| ३९ परान्नाविघ्नकर्त्ता | अजीर्णी | गायत्र्या लक्षहोमं कुर्यात्। |
| ४० परोपतापी | शूली | अन्नदानं रुद्रजपं च प्रकुर्वीत। |
| ४१ परोपहासकृत् | काणः | सकांचनां गां दद्यात्। |
| ४२ पिशुनः | श्वासकासी | सहस्रपलपरिमितं घृतं दद्यात्। |
| ४३ प्रतिमाभङ्गकारी | अप्रतिष्ठः | वत्सरत्रयपर्यन्तं प्रतिदिनमश्वत्थसेचनं विप्रकन्योद्वाहनं विघ्नराजप्रतिमां च स्थापयेत्। |
| ४४ मद्यपः | रक्तपित्ती श्यावदन्तश्च | सर्पिषो घटं ससुवर्णं मधुनोर्धघटं च दद्यात्। |
| ४५ मार्गहा | पादरोगी | अश्वं दद्यात्। |
| ४६ रजस्वलादृष्टान्नभोक्ता | कृमिलोदरः | त्रिरात्रं गोमूत्रयावकं भक्षयेत्। |
| ४७ विषदः | छर्दिरोगी | दश पयस्विनीर्गा दद्यात्। |
| ४८ सभायांपक्षपाती | पक्षाघातवान् | निष्कत्रयपरिमितं हेम दद्यात्। |
| ४९ सुराजले जले वा शकृन्मूत्रं कृत | गुदरोगी | मासमेकं सुरार्चनं गोद्वयदानं प्राजापत्यमेकं च कुर्यात्। |
| ५० अगम्यगामी | ध्रुवमण्डली(कुष्ठविशेषयुक्तः) | कार्पासभारं सवत्सकतिलहेमधेनुं दद्यात्। |
| ५१ अश्वयोनिगामी | गुदस्तम्भी | शिवाय सहस्रकमलमर्पयेत्। |
| ५२ आमान्नहारी | हीनदीप्तिः | निष्कद्वयसुवर्णनिर्मितावश्विनौ दद्यात्। |
| ५३ इक्षोर्विकारहारी | उदरगुल्मवान् | गुडधेनुं दद्यात्। |

| | | |
|---|---|---|
| ५४ ऊर्णाहारी | लोमशः | कम्बलान्वितनिष्कसुवर्णनिर्मितवह्निमूर्तिं दद्यात् |
| ५५ औषधहारी | सूर्यावर्त्तरोगी | मासपर्यन्तं सूर्यायार्घ्यं दत्त्वा कांचनं दद्यात् । |
| ५६ कन्दमूलफलहारी | ह्रस्वपाणिः | यथाशक्ति देवगृहमुद्यानं च कुर्यात् । |
| ५७ कांस्यहर्त्ता | पुण्डरीककुष्ठी | शतपलकांस्यं दद्यात् । |
| ५८ चाण्डालीगामी | हीनाण्डकोषः | शातातपोक्तं प्रायश्चित्तं कुर्यात् । |
| ५९ तपस्विनीगामी | प्रमेहरोगी | मासमेकं रुद्राध्यायं जपित्वा यथाशक्ति सुवर्णदानम् । |
| ६० ताम्बूलहारी | श्वेतोष्ठः | सदक्षिणं विद्रुमं दद्यात् । |
| ६१ ताम्रचौरः | रक्तकुष्ठी | प्राजापत्यव्रतं कृत्वा शतपलपरिमितं ताम्रं दद्यात् । |
| ६२ तैलचोरः | कण्ड्वादिपीडितः | उपवासमेकं कृत्वा तैलघटद्वयं दद्यात् । |
| ६३ त्रपुहारी | नेत्ररोगी | उपवासं कृत्वा घृतधेनुं दद्यात् । |
| ६४ दधिचौरः | मेदवान् | दधिधेनुदानम् । |
| ६५ दारुहारी | स्विन्नपाणिः | पलद्वयं कुंकुमं दद्यात् । |
| ६६ दीक्षितस्त्रीप्रसङ्गी | दुष्टरक्तहृद्रोगी | प्राजापत्यद्वयं कुर्यात् । |
| ६७ दुग्धहारी | बहुमूत्रकः | दुग्धधेनुं दद्यात् । |
| ६८ देवहारी | विविधज्वरी | रुद्रं जपेत् । |
| ६९ नानाविधद्रव्यचौरः | ग्रहणीयुक्तः | अन्नोदकवस्त्राणि सुवर्णं च दद्यात् । |
| ७० पक्वान्नहारी | जिह्वारोगी | लक्षगायत्रीजपस्तद्दशांशतिलहोमश्च । |
| ७१ पट्टसूत्रहारी | विलोमा | धेनुं दद्यात् । |
| ७२ पशुयोनिगामी | मूत्राघाती | तिलपात्रद्वयदानम् । |
| ७३ पितृष्वसृगामी | दक्षिणांशव्रणी | अजादानं कुर्यात् । |
| ७४ पुत्रजायाभिगामी | कृष्णकुष्ठी | शातातपोक्तं प्रायश्चित्तं कुर्यात् । |
| ७५ फलाहारी | व्रणितांगुलिः | अयुतसंख्यकनानाफलदानम् । |
| ७६ भ्रातृजायागामी | गुल्मकुष्ठी | शातातपोक्तं प्रायश्चित्तम् । |
| ७७ मधुचौरः | नेत्ररोगवान् | उपवासं कृत्वा मधुधेनुं दद्यात् । |
| ७८ मातुलानीगंता | पृष्ठकुब्जः | कृष्णाजिनदानं दद्यात् । |
| ७९ मातृगामी | लिङ्गहीनः | शातातपोक्तं प्रायश्चित्तं कुर्यात् । |

| | | |
|---|---|---|
| ८० मातृष्वसृगन्ता | नानांगे व्रणवान् | दासदानं कर्पासभारदानं हेमधेनुदानं च । |
| ८१ मृतभार्यागामी | मृतभार्यः | एकं ब्राह्मणं विवाहयेत् । |
| ८२ स्वगोत्रागामी | भगन्दररोगी | महिषीं दद्यात् । |
| ८३ स्वजातिस्त्रीगामी | हृदयव्रणी | प्राजापत्यद्वयं कुर्यात् । |
| ८४ स्वसुतागामी | रक्तकुष्ठी | शातातपोक्तं प्रायश्चित्तं कुर्यात् । |
| ८५ रक्तवस्त्रप्रवाल-हारी | रक्तवातरोगी | मणिरागसमन्वितां सवस्त्रां महिषीं दद्यात् । |
| ८६ लोहहारी | कर्बुरांगः | एकदिनमुपोष्य शतपललोहं दद्यात् । |
| ८७ वस्त्रहारी | कुष्ठी | निष्कमितहेमनिर्मितप्रजापतिं वस्त्र-युग्मं च दद्यात् । |
| ८८ विद्यापुस्तकहारी | मूकः अंधश्च | सदक्षिणं न्यायेतिहासं दद्यात् । |
| ८९ विप्ररत्नहर्त्ता | अनपत्यः | महारुद्रजपादिकं कृत्वा तद्दशांशपला-शसमिद्भिर्यथाविधि होमं कुर्यात् । |
| ९० विप्रहेमहृत् | कुलघ्नः | चान्द्रायणत्रयानन्तरं सुवर्णशतं दद्यात् । |
| ९१ शाकहारी | नीललोचनः | महानीलमणिद्वयं दद्यात् । |
| ९२ शुक्तिहारी | पाण्डुमूर्धजः | उपवासानन्तरं पलशतं शुक्तिं दद्यात् । |
| ९३ सौगन्धिकहारी | दुर्गन्धाङ्गः | अग्नौ लक्षसंख्यकपद्मैर्होमं कुर्यात् । |
| ९४ अन्नहारी | शूलरोगी | पलसुवर्णकृतं राजतं वा शूलं दद्यात् । |
| ९५ नग्नपरस्त्रीद्रष्टा<br>९६ अस्तमयोदये सूर्यद्रष्टा | नेत्रशूली | वर्चोदा असि इति मन्त्रमयुतसंख्यकं जपेत् । वयः सुपर्ण इति अक्षिभ्यामिति मन्त्रेण च वारिणा नेत्रे सिंचेत् । |
| ९७ देवद्रव्यहारी | विविधज्वरवान् | रुद्रजपं कुर्यात् । |
| ९८ कृतघ्नः | श्वासकासवान् | चान्द्रायणत्रयं कृत्वा पंचाशद्ब्राह्मणान् भोजयेत् । |
| ९९ कुरुक्षेत्रादितीर्थ-स्थले प्रतिग्राही | सपामा श्वासकासवान् | माहिषीदानं गायत्रीजपश्च । |
| १०० पिशुनः | श्वासकासवान् | सहस्रपलं घृतं दद्यात् । |
| १०१ राजमार्गादिषु मूत्रपुरीषकारी | श्वयथुरोगी | कृच्छ्रत्रयं कृत्वा गायत्र्याऽयुतजपं कुर्यात् । |

| | | | |
|---|---|---|---|
| १०२ | वैश्यहन्ता | छिन्नान्त्रः | कृच्छ्रातिकृच्छ्रं कृत्वा शतब्राह्मणान् भोजयेत्। |
| १०३ | यज्ञविघ्नकारी | अन्त्रवृद्धिमान् | सुवर्णमयीं नारायणप्रतिमां दद्यात्। |
| १०४ | अत्युत्तमस्त्रीगामी | मस्तकव्रणी | प्राजापत्यचतुष्टयं कार्यम्। |
| १०५ | सन्ध्यादिकर्मकाले कुक्कुटखरादिद्रष्टा | नासिकाव्रणी आर्द्रनेत्रश्च | स्वर्णहारिणीदानं धेनुदानं च। |
| १०६ | जलाग्निबन्धनादिना मृतः | उरसि व्रणवान् | गोद्वयं दत्त्वा पंचाशद् विप्रान् भोजयेत्। |
| १०७ | अदण्ड्यदण्डी | गुल्मव्रणी | गोदानम्। |
| १०८ | हीनजातिगामी | चरणव्रणी | प्राजापत्यं कुर्यात्। |
| १०९ | व्यभिचारिणीविधवा गामी | योनिव्रणी | त्रीन् नीलवृषान् मधुसर्पिस्तिलांश्च दद्यात्। |
| ११० | लोभादिना धर्मनिर्णयेऽन्यथावादी | पूयशोणितबहुव्रणी | अतिकृच्छ्रं कृत्वा तिलप्रस्थं दद्यात्। |
| १११ | परमर्मोद्घाटकः— | प्लीही श्लीपदरोगी च | चान्द्रायणं कृत्वा कूष्मांडहोमं कुर्यात्। |
| ११२ | स्वसृघाती | बधिरः | चान्द्रायणं कृत्वा सुवर्णकर्षयुतं पुस्तकं दद्यात्। |
| ११३ | भ्रातृघाती | मूकः | चान्द्रायणं कृत्वा पलसुवर्णयुतं पुस्तकं दद्यात्। |
| ११४ | कुक्कुटघाती | वक्रनसः | निष्कत्रयं सुवर्णं दद्यात्। |
| ११५ | बकघाती | लम्बकण्ठः | सर्वाभरणभूषितां श्वेतां गां दद्यात्। |
| ११६ | उच्छिष्टभोजी बिडालोच्छिष्टभोजी च | रात्र्यन्धः | यथाशक्ति विप्रान्भोजयेत्। |
| ११७ | परान्नविघ्नकारी | अजीर्णरोगी | लक्षहोमं कुर्यात्। |
| ११८ | भ्रातृघातिनी स्त्री | मूकत्ववती | ब्रह्महत्यावत्प्रायश्चित्तम्। |
| ११९ | बालघाती | मृतपुत्रः | हरिवंशश्रवणं ब्राह्मणोद्वाहनं शंकरपूजां च कुर्यात्। |
| १२० | मित्रहा | वातरोगी | वायुदेवतामन्त्रजपं तत्पूजां च कुर्यात्। |
| १२१ | विषेण पतिघ्नी स्त्री। | बालविधवा | विष्णोराराधनं गङ्गासेवनं कृच्छ्रव्रतं च कुर्यात्। |

| | | |
|---|---|---|
| १२२ अग्निना देवस्थानदाही | रक्तातिसारी | तद्देवताकमूर्त्तिदानं तत्स्थापनं च कार्यम् । |
| १२३ देवागारगोष्ठश्मशानादिषु विण्मूत्रकारी | अर्शोरोगी | मासमेकं विष्णुं शिवं च पूजयेत् । प्राजापत्यं कृत्वा गोमिथुनं च दद्यात् । |
| १२४ साध्वीस्त्रीघाती | कार्श्यरोगी | अनाथविप्रकन्योद्वाहः कार्यः । |
| १२५ कन्यकाघाती | कुष्ठी, कन्याजनकश्च | लक्षपार्थिवशिवपूजनं तद्दशांशेन तिलहोमं तद्दशांशेन ब्राह्मणांश्च भोजयेत् । तडागोत्सर्गं च कुर्यात् । |
| १२६ गर्भपातकः पातिका च | जलोदरी जलोदरवती च | जलधेनुदानम् । ताम्ररौप्यसुवर्णदानं च कुर्यात् । मकरार्के प्रयागस्नानं च । |
| १२७ कुक्कुरघाती | चक्रपादपीडितः | निष्कत्रयसुवर्णदानम् । |
| १२८ नकुलहा | बभ्रुमण्डलरोगार्त्तः | निष्कद्वयसुवर्णनिर्मितं नकुलं दद्यात् । |
| १२९ शशघाती | कुब्जवर्णः | वेदपारगाय सोपस्करं शशं दद्यात् । |
| १३० उलूकघाती | पाण्डुरोगी | कस्तूरिकापलं दद्यात् । |
| १३१ द्रव्यहारी | गलगण्डरोगी | .... .... .... .... |
| १३२ गुरुवञ्चकः शिष्यवञ्चकश्च | " | माणिक्यादिरत्नमालादानम् । |
| १३३ भुंजानश्चाण्डालवाक्यं शृण्वन् | पित्तोद्रेकी | स्वर्णदानमजदानं च । |
| १३४ अनिर्दशाया गोः पयःपानकारी | बहुस्फोटवान् | उपवासत्रयं कृत्वा त्रिंशतिविप्रान् भोजयेत् । |
| १३५ गुर्वप्रीतिकरः | वातरोगी | अच्युतानन्तगोविन्देति नामत्रयेण जपहोमं कुर्यात् । |
| १३६ स्त्रियं बलाद्भोक्ता | सर्वसन्धिषु वेदनः | महिषीदानं कुर्यात् । |
| १३७ लशुनगृंजनतालफलभक्षी | वातपित्तरोगी | चान्द्रायणं कुर्यात् । |
| १३८ भिन्नपात्रस्नायी चेद् ब्रह्मचारी | शिरोरोगी | अक्षिभ्यामिति सूक्तमष्टोत्तरशतं जपेत्तेनैव च होमं कुर्याच्चरुघृताभ्याम् । |

| | | |
|---|---|---|
| १३९ कूटसाक्षी | वक्ररोगी | कृच्छ्रातिकृच्छ्रचान्द्रायणानि कुर्यात् । |
| १४० अनृतभाषी<br>१४१ वेद-धर्मशास्त्रविक्रेता<br>भृतकाध्यापकश्च | जिह्वारोगी<br>अपरिस्फुटवक्त्रः<br>जिह्वायां व्रणश्च | पराकव्रतं कृत्वा कूष्माण्डीहोमं कुर्यात् ।<br>तामग्निवर्णाख्यं सूक्तमयुतत्रयं जपित्वा सुवर्णं दद्यात् । |
| १४२ लवणहारी | शीर्णघ्राणांघ्रिपाणिः | उद्यन्नद्येत्यृचं त्र्ययुतं जपित्वा रक्तवस्त्रदानं देवद्विजपूजनं च कुर्यात् । |
| १४३ परमैथुनद्रष्टा | पूययुक्तनेत्रविकारी | सहस्रकलशैः सूर्यस्य स्नानम् । |
| १४४ स्वाम्यङ्गनागामी | दद्रुमण्डलरोगी | षष्टिपललोहमयीं धेनुं कार्पासभारयुतां सप्तधान्यसहितां दद्यात् । |
| १४५ विश्वस्तभार्यागामी | गजचर्मा | कृच्छ्रव्रतं कृत्वा सोपस्करां धेनुं दद्यात् । |
| १४६ मयूरघाती | कृष्णमण्डलरोगी | निष्कत्रयसुवर्णरचितं मयूरं दद्यात् । |
| १४७ हंसघाती | श्वेतमण्डली | पलत्रयरजतनिर्मितं हंसं दद्यात् । |
| १४८ अमेध्यदाता | विसर्परोगी | मासं पयोव्रतं कृत्वा पयस्विनीं धेनुं दद्यात् । |
| १४९ कन्यादूषी | प्लीहवान् | अयुतत्रयं श्रीसूक्तं पठेत् । |
| १५० ब्रह्मविष्णुरुद्राणां भेदवादी | उदररोगी | कृच्छ्रातिकृच्छ्रचान्द्रायणानि कृत्वा सहस्रकलशैः शिवाभिषेकं कार्यम् । |
| १५१ धर्मनिश्चये नियुक्तो<br>१५२ राजपुरोहितो मंत्री वा अन्यथाकारी | जलोदरी | मासत्रयं पयोव्रतं कृत्वा सहस्रकलशैः रुद्राभिषेकं कार्यम् । |
| १५३ गोमांसभक्षी | मन्दाग्निरोगी | प्राजापत्यत्रयं कृत्वा मेषदानं तण्डुलदानं च कुर्यात् । |
| १५४ मातुःसपत्नीगामी | अश्मरीरोगी | त्रैमासिकव्रतं कृत्वा मधुधेनुं दद्यात् । |
| १५५ भगिनीगामी | बहुसूत्री पीतकुष्ठी च | पराकद्वयं कृत्वा सहस्रपुरुषसूक्तपाठं ब्राह्मणभोजनं च । |
| १५६ उपासनाग्निनष्टकारी | अतिसारी | अग्निरश्मीत्यृचं जप्त्वा तद्दशांशं तिलहोमं च कृत्वा हिरण्यं दद्यात् । |

| | | |
|---|---|---|
| १५७ द्रव्यहारिणीस्त्री | मृतपुत्रा | |
| १५८ प्राणघातिनीस्त्री | एकपुत्रा | |
| १५९ ऋणाऽदात्री | कन्याप्रजा | स्वर्णधेनुदानंकुर्यात् । |
| १६० विरोधकारिणी | काकवन्ध्या | |
| १६१ बालघातिनी | स्रवद्गर्भा | कांचनमयं यज्ञोपवीतं दद्यात् । |
| १६२ दुग्धहारिणी | अदुग्धस्तनवती | क्षीरान्नेन ब्राह्मणान् भोजयेत् विप्रचरणोदकेन स्तनौ क्षालयेत् । |

इत्यादि ।

---

अथ कुष्ठरोगशांतिविधानम् । शातातपसंहितायां-"ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते । प्रायश्चित्तं प्रकुर्वीत स तत्पातकशान्तये । चत्वारः कलशाः कार्याः पञ्चरत्नसमन्विताः । पंचपल्लवसंयुक्ताः सितवस्त्रेण वेष्टिताः । अश्वस्थानादिमृद्युक्तास्तीर्थोदकप्रपूरिताः । कषायपञ्चकोपेता नानाविधफलान्विताः । सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः । रौप्यमष्टदलं पद्मं मध्यकुंभोपरि न्यसेत् । तस्योपरि न्यसेद्देवं ब्रह्माणं च चतुर्मुखम् । पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्मितम् । अर्चेत्पुरुषसूक्तेन त्रिकालं प्रतिवासरम् । यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि । पूर्वादिकुंभेषु ततो ब्राह्मणा ब्रह्मचारिणः । पठेयुः स्वस्ववेदांस्ते ऋग्वेदप्रभृतीञ्छनैः । दशांशेन ततो होमो ग्रहशांतिपुरःसरम् । मध्यकुंभे विधातव्यो घृताक्तैस्तिलहेमाभिः । द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः । तत्र पीठे यजमानमभिषिञ्चेद्यथाविधि।ततो दद्याद्यथाशक्ति गोभूहेमतिलादिकम् । ब्राह्मणेभ्यस्तथा देयमाचार्याय निवेदयेत् । ॐ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । प्रीताः सर्वे व्यपोहंतु मम पापं सुदारुणम् । इत्युदीर्य मुहुर्भक्त्या तमाचार्यं क्षमापयेत्। एवं विधाने विहिते श्वेतकुष्ठी विशुद्ध्यति॥" अथ गोवधजनितकुष्ठरोगशमनविधानम् । तत्रैव-"कुष्ठी गोवधकारीस्यान्नरकान्तेऽस्य निष्कृतिः । स्थापयेद्घटमेकं तु पूर्वोक्तद्रव्यसंयुतम् । रक्तचंदनलिप्ताङ्गं रक्तपुष्पाम्बरान्वितम् । रक्तकुंभं तु तं कृत्वा स्थापयेद्दक्षिणां दिशम्। ताम्रपात्रं न्यसेत्तत्र तिलचूर्णेन पूरितम्। तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम । यजेत्पुरुषसूक्तेन पापं मे शाम्यतामिति । सामपारायणं कुर्यात्कलशे तत्र सामवित् । दशांशं सर्षपैर्हुत्वा पावमान्यभिषेचने । विहिते धर्मराजानमाचार्याय निवेदयेत्। यमोऽपि महिषारूढो दण्डपाणिर्भयावहः । दक्षिणाशापतिर्देवो मम पापं व्यपोहतु॥ १ ॥ इत्युच्चार्य विसृज्यैनं मासं मद्भक्तिमाचरेत्।ब्रह्मगोवधयोरेषा प्रायश्चित्तेन निष्कृतिः ॥"अथ पितृमातृवधजनितपा-

पशमनविधानम् । तत्रैव-"पितृहा चेतनाहीनो मातृहान्धः प्रजायते । नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि । प्राजापत्यानि कुर्वीत त्रिंशच्चैव विधानतः ॥ व्रतान्ते कारयेन्नावं सौवर्णपलसंमिताम् । कुंभं रौप्यमयं चैव ताम्रपात्राणि पूर्ववत् । निष्कहेम्ना तु कर्तव्यो देवः श्रीवत्सलाञ्छनः । पट्टवस्त्रेण संवेष्ट्य पूजयेत्तं विधानतः । नावं द्विजाय तां दद्यात् सर्वोपस्करसंयुताम् । वासुदेव जगन्नाथ सर्वभूताशयस्थित । पातकार्णवमग्नं मां तारय प्रणतार्तिहृत् ॥ १ ॥ इत्युदीर्य प्रणम्यार्थ ब्राह्मणाय विसर्जयेत् । अन्येभ्योऽपि यथाशक्ति विप्रेभ्यो दक्षिणां ददेत् ॥ " अथ स्वसृवधभ्रातृवधजनितवधिररोगानिष्कृतिविधानम् ॥ तत्रैव-"स्वसृघाती तु वधिरो नरकान्ते प्रजायते। मूको भ्रातृवधे चैव तस्यैव निष्कृतिः स्मृता । सोऽपि पापविशुद्ध्यर्थं चरेच्चान्द्रायणव्रतम् । व्रतान्ते पुस्तकं दद्यात्सुवर्णफलसंयुतम् । इमं मंत्रं समुच्चार्य ब्रह्माणीं तां विसर्जयेत् । सरस्वति जगन्मातः शब्दब्रह्माधिदेवते । दुष्कर्मकरणात्पापात्पाहि मां परमेश्वरि ॥ १ ॥ अथ मातृगमनचाण्डालीगमनजनितलिंगवृषणहीननिष्कृतिविधानम् । तत्रैव-" मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति । चाण्डालीगमने चैव हीनकोषः प्रजायते । तस्य प्रतिक्रियां कर्त्तुं कुंभमुत्तरतो न्यसेत् । कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् । तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम् । सुवर्णनिष्कषट्केन निर्मितं नरवाहनम् । यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम् । अथर्ववेदविद्विप्रो ह्याथर्वणं समाचरेत् । सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसंख्यया । दद्याद्विप्राय संपूज्य निष्पापोऽहमितिब्रुवन् । निधीनामधिपो देवः शंकरस्य प्रियः सखा । सौम्याशाधिपतिः श्रीमान् मम पापं व्यपाहतु ॥ १ ॥ इमं मन्त्रं समुच्चार्य्य आचार्याय यथाविधि । दद्याद्देवं हीनकोषे लिङ्गनाशे विशुद्धये ॥" अथ गुरुस्त्रीगमनदोषजनितमूत्रकृच्छ्ररोगशमनविधानम् । शातातपस्मृतौ-गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते । तेनापि निष्कृतिः कार्या शास्त्रदृष्टेन कर्मणा । स्थापयेत्कुंभमेकं तु पश्चिमायां शुभे दिने । नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम् । तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम् । सुवर्णनिष्कषट्केन निर्मितं यादसांपतिम् । यजेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम् । सामविद्ब्राह्मणस्तत्र सामवेदं समाचरेत् ॥ सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसंख्यया । दद्याद्विप्राय संपूज्य निष्पापोहमितिब्रुवन् । यादसामधिपो देवो विश्वेषामपि पावनः ॥ संसाराब्धौ कर्णधारो वरुणः पावनोस्तु मे ॥ १ ॥ इमं मंत्रं समुच्चार्य्य आचार्याय यथाविधि । दद्याद्देवमलंकृत्य मूत्रकृच्छ्रप्रशान्तये ॥ अथ स्वसुतागमजनितरक्तकुष्ठभगिनीगमनजनितपीतकुष्ठशमनविधानम् । तत्रैव-"स्वसुतागमने चैव रक्तकुष्ठं प्रजायते । भगिनीगमनेनैव पीतकुष्ठं प्रजायते ॥

तस्य प्रतिक्रियां कर्तुं पूर्वतः कलशं न्यसेत् । पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम् । तस्योपरि न्यसेत्स्वर्णपात्रे देवं सुरेश्वरम् । सुवर्णनिष्कपट्टकेन निर्मितं वज्रधारिणम् ॥ यजेत्पुरुषसूक्तेन वासवं विश्वरूपिणम । यजुर्वेदं तत्र साम ऋग्वेदं च समाचरेत् । सुवर्णपुत्रिकां कृत्वा सुवर्णदशकेन तु । दद्याद्विप्राय संपूज्य निष्पापोऽहमितिब्रुवन । देवानामधिपो देवो वज्री विष्णुनिकेतनः । शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु ॥ १ ॥ इमं मंत्रं समुच्चार्य्य आचार्याय यथाविधि । दद्याद्देवं सहस्राक्षं स पापस्यापनुत्तये॥" अथ भ्रातृभार्यागमनजनितगलत्कुष्ठस्वपुत्रभार्यागमनजनितकृष्णकुष्ठशमनविधानम् । तत्रैव-"भ्रातृभार्याभिगमानाद्गलत्कुष्ठं प्रजायते । स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते । तेन कार्यं विशुद्ध्यर्थं प्रागुक्तस्यार्धमेव हि । दशांशहोमः सर्वत्र घृताक्तैः क्रियते तिलैः । यदगम्याभिगमनाज्जायते ध्रुवमण्डलम् । कृत्वा लोहमयीं धेनुं तिलपष्टिप्रमाणतः । कार्पासभारसंयुक्तां कांस्यदोहां सवत्सिकाम् । दद्याद्विप्राय विधिवदिमं मंत्रमुदीरयेत् । सुरभी वैष्णवी माता मम पापं व्यपोहतु ॥" इति कुष्ठादिरोगकर्मविपाकविधानम् । विशेषस्तु शातातपसंहितायां वृद्धसूर्यारुणसंवादनिबंधे महार्णवे च ज्ञेयम् । अत्र विस्तरभयान्न लिख्यते ॥

इति श्रीगंगायमुनान्तरविषयान्तर्गतश्रीरत्नगढनगरनिवासिना कर्मकाण्डाचार्य-कर्मकाण्डकोविद-कर्मकाण्डभूषण-श्रौतभूषण-स्मृत्युपाधिचतुष्टयविभूषितेन पण्डितगौडश्रीचतुर्थीलालशर्मणा विरचिते प्रायश्चित्तप्रकाशे कर्मविपाकविधायकस्तृतीयः काण्डः समाप्तः ॥ समाप्तोयं ग्रन्थः ॥ ॐ शिवार्पणमस्तु ॥

---



पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेङ्कटेश्वर" स्टीम् प्रेस, कल्याण-मुंबई.

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस, खेतवाडी-मुंबई.